प्रथाभासनात्मिकायास्तत्त्वरूपाया मायाया उपरि स्थिता महामाया या षट्-त्रिंशं शिवतत्त्वमपि व्याप्यावस्थिता, तद्रूपे ! इत्यर्थः । अथवा भगवतः कामेश्वरस्याशेषविश्वोल्लासनादिक्रीडाशालितया वैश्वात्म्यवैचित्र्यावभासने यत् स्वातन्त्र्यं तदेव तदव्यतिरिक्ता मायाशक्तिरित्युच्यते । अत एव मीनाति अपूर्णताप्रथनेन हिनस्तीति । तत्र भेदावभासस्य बहिरुल्लिलसिषामात्रतायां या निर्विभागा दशा यस्यां भाविनो भेदावभासवैचित्र्यस्य शिम्बिकाफलवद्गर्भीकारः सैव कारणे कार्योपचारान्महामाया । तदुक्त श्रीमदभिनवगुप्तपादैः—

माया च नाम देवस्य शक्तिरव्यतिरेकिणी ।
भेदावभासस्वातन्त्र्यं तथाहि स तया कृतः ॥
आद्यो भेदावभासो यो विभागमनुपेयिवान् ।
गर्भीकृतानन्तभाविविभागा सा परा निशा ॥
त० आ० ६ श्लो० १४६-५१

इति । यद्वा ब्रह्मादीनपि यतो मोहयत्यतो महामायेत्युच्यते । तदुक्तम् —

*ज्ञानिनामपि चेतांसि देवी भगवतीहिसा ।
बलादाकृष्य मोहाय महामाया प्रयच्छति ॥

इति !

कालिकापुराणेऽपि—

गर्भान्तर्ज्ञानसम्पन्नं प्रेरितं सूतिमारुतैः ।
उत्पन्नं ज्ञानरहितं कुरुते या निरन्तरम् ॥
पूर्वातिपूर्वसङ्घातसंस्कारेण नियोज्य च ।
आहारादौ ततो मोहं ममत्वाज्ञानसंशयम् ॥
क्रोधोपरोधलोभेषु क्षिप्त्वा क्षिप्त्वा पुनःपुनः ।

---

*दुर्गासप्तशती अ १ श्लो. ५५ ।

CC-0 Kashmir Research Institute. Digitized by eGangotri

पश्चात् कामे नियोज्याशु चिन्तायुक्तमहर्निशम् ॥
आमोदयुक्तं व्यसनासक्तं जन्तुं करोति या ।
महामायेति संप्रोक्ता तेन सा जगदीश्वरी ॥
आ० ६ श्लो० ६४-६८

इति । ई त्रिमूर्तिर्महामायेति कोषान्महामायेतिपदेनात्र कामकलोद्धारो ज्ञेयः । केचित् कुलाम्नायवादिनस्तव वपुः स्वरूपंकुलं शक्तिलक्षणं पारमेश्वरींशक्तिं प्राहुः । तदुक्तं श्रीतन्त्रालोके—

'कुलं च परमेशस्य शक्तिःसामर्थ्यमूर्ध्वते'त्यादि । यद्वा लयोदयकारित्व-लक्षणं सामर्थ्यं सर्वेषां करणत्वेनोपरिवर्तित्वं वा । सर्वकर्तृत्वाद्यात्मकं स्वातन्त्र्यं वा, विश्वस्य सामरस्येनावस्थानात्मकं पिण्डं वा, परं तेजो वा, शाक्तं वीर्यं वा, परमानन्दशक्तिं वा, परमेश्वरस्यात्मस्वरूपं परसंविल्लक्षणं वा, इत्याद्यागम-प्रसिद्धार्थानुगमात् कुलशब्दो यथासंभवमर्थान्तरेषु नेयः । तदुक्तम्—

'कुलं हि परमा शक्तिरिति' ।
तथा – लयोदयश्चित्स्वरूपस्तेन तत्कुलमुच्यते । इति ।
तथा – स्वभावे बोधममलं कुलंसर्वत्र कारणम् । इति ।
तथा – सर्वकर्तृविभुसूक्ष्मं तत्कुलं वरवर्णिनि ! इति ।
तथा – सर्वेशं तु कुलं देवि ! कुलंसर्वव्यवस्थितम ।
तत्तेजः परमं घोरम् ।————इति ॥

तथा—

"शक्तिगोचरगं वीर्यं तत्कुलं विद्धि सर्वगम्" । इति । तथा "कुलं स परमानन्दः" इति, कुलमात्मस्वरूपंत्विति च । अन्ये बुधास्तान्त्रिका विद्वांसोऽकुलं कुलादन्यच्छिवलक्षणं प्राहुः । तदुक्तं श्रीतन्त्रलोके—

अकुलस्यादिदेवस्य कुलप्रथनशालिनी ।

CC-0 Kashmir Research Institute. Digitized by eGangotri

कौलिनी सा पराशक्तिरवियुक्तो यया प्रभुः ॥ (आ. ३ श्लो. ६७)

इति । परे इतरे त्रिकादिदर्शनवादिनस्तत्सम्भेदं तयोः कुलाकुलयोः शिवशक्तिलक्षणयोः परस्परौन्मुख्यात्मकं सामरस्यावस्थानाद्यामलं रूपमानन्दशक्तिपर्यायं समभिदधते व्याहरन्ति । तदुक्तम्—

तयोर्यद्यामलं रूपं संघट्ट इति स स्मृतः ।
आनन्दशक्तिः सैवोक्ता यतो विश्वं विसृज्यते ॥ (आ. ३ श्लो. ६८)

इति । अपरेऽन्ये प्रत्यभिज्ञादर्शनवादिनः कौलं कुले शक्तावकुलस्य शिवस्येदं सम्बन्धात्मकं रूपं प्रकाशस्य पूर्णाहन्तात्मस्वात्मविश्रान्तिलक्षणं समभिदधते । तदुक्तम्—

कुलं शक्तिरितिप्रोक्तमकुलं शिव उच्यते ।
कुलेऽकुलस्य सन्बन्धः कौलमित्यभिधीयते ॥ इति ।

तथा—

प्रकाशस्यात्मविश्रान्तिरहम्भावो हि कीर्तितः ।
उक्ता सैव च विश्रान्तिः सर्वापेक्षानिरोधतः ॥ (अ. प्र. सि.श्लो. २२)

इत्यादि । यद्वा-कुलानां मातृमानमेयानां भिन्नतयावभासमानानां सम्बन्धितयानुगामि तत्समष्टिलक्षणं कौलमित्यर्थः अपरे बुधा एषांचतुर्णां समनन्तरोक्तानां कुलादीनामप्युपरि सर्वोर्ध्वे तव किमपि शिवशक्त्यादिनियतव्यपदेशासहिष्णुतया अनाख्यानुत्तरमहाप्रकशलक्षणं परं शुद्धतत्त्वं निस्तरङ्गपरनभःसमुद्रप्रख्यं कुलाकुलादिविकल्पदशोज्भितत्वात् परमाकाशलक्षणं महाकौलमिति प्राहुः । किञ्च कुलं सजातीयसमूहमेकज्ञानविषयत्वरूपं साजात्यमापन्नानां नीलादीनां वेद्यतारूपप्रमेयलक्षणं तव वपुःशाक्तं स्वरूपं केचित् प्राहुः । तदुक्तं

CC-0 Kashmir Research Institute. Digitized by eGangotri

शिवसूत्रेषु* 'शक्तिप्रचयोऽस्य विश्वम्' ३-३० इति। अन्यत्रापि—

†शक्तिश्च शक्तिमांश्चैव पदार्थद्वयमुच्यते।
शक्तयोऽस्य जगत् कृत्स्नं शक्तिमांस्तु महेश्वरः॥

इत्येतेन भगवत्या विश्वमयताप्रतिपादनमिति तन्मताशयः। अन्ये बुधास्तव तत्त्वमकुलं कुलादुक्तरूपादन्यत्तदुतीर्णं प्रमातृलक्षणं प्राहुः, एतेन विश्वोत्तीर्णं वपुरिति तन्मतम्। परे तत्सम्भेदं तयोः प्रमातृप्रमेययोर्माध्यस्थ्या तत्संसर्गात्मकं प्रमाणलक्षणं समभिदधते एतेनोभयात्मकं रूपमितितन्मतम्! अपरे कौलं प्रमेयसम्बन्धि प्रमात्मकं प्रमेयाकारवृत्तीनां प्रमातरि प्रतिबिम्बलक्षणं प्राहुः। अपरे एषां चतुर्णामपि समनन्तरोक्तमातृमानमेयप्रमितिलक्षणानामुपरि ऊर्ध्वे तदतीतं किमप्यनाख्यं स्वच्छस्वतन्त्रपूर्णाहंपरामर्शरूपपरप्रमात्रेकमहाप्रकाशस्वभावं पारमार्थिकं तव वपुः प्राहुरिति। तदुक्तं चतुश्शत्याम्—

अतीतं तु परं तेजःस्वसंविदुभयात्मकम्।
स्वेच्छाविश्वमयोल्लेखखचितं विश्वरूपकम्॥
चैतन्यमात्मनो रूपं निसर्गानन्दसुन्दरम्।
मातृमानप्रमामानप्र-सरैः सङ्कुचत्प्रभम्॥

इति। अतोऽमी वयं तव तत्त्वं पारमार्थिकं स्वरूपं कथं निश्चिनुमहे, प्रोक्तनानाभेदकल्पनाभिः समधिरूढसंशयदोलाशय्याकत्वात् परातत्त्वावबोधस्य दुरवधारत्वात्। अतस्त्वत्साक्षात्कारं विना तत्त्वनिर्णयोऽस्माकं दुष्कर इत्यर्थः। अमी इत्यनेन स्तुतिकर्तुरुक्ततत्त्वनिर्णयविकल्पेषु पक्षपातः साधारण इति कटाक्षितम्। यद्वा अमी वयमितिजनसाधारण्येन परामर्शात्ते सर्वेऽपि

*१. मु. पु. स्वशक्तिप्रचयोऽस्यविश्वमिति पाठः। †२. श्री सर्वमङ्गला।

CC-0 Kashmir Research Institute. Digitized by eGangotri

मया सह त्वत्प्रसादाशंसिन इत्यावेद्यते ॥१०॥

अथ भगवतीपदाब्जप्रणतानां मायीयदेहतिरस्कृत्या अलौकिक देहपरिणामनिष्पत्तौ शक्तिरेव हेतुरित्याशयेनाह—

**षडध्वारण्यानीं प्रलयरविकोटिप्रतिरुचा**
**रुचा भस्मीकृत्य स्वपदकमलप्रह्वशिरसाम् ।**
**वितन्वानः शैवं किमपि वपुरिन्दीवररुचिः**
**कुचाभ्यामानम्रः [*]शिवपुरुषकारो विजयते ॥११॥**

षडध्वारण्यानीं षण्णां मूलाधाराद्याज्ञान्तचक्राणां येऽध्वान ऊर्ध्वाधःस्थतया द्वादशग्रन्थ्यात्मका मार्गास्तद्रूपामरण्यानीं दुष्प्रवेशसञ्चारत्वेनातिगहनं महावनं समनान्तप्रक्रियाजालरूपञ्च प्रलयरवेः संवर्तकार्कस्य कोटेर्दशप्रयुतानां प्रतिरुचा समानदीप्त्या रुचा स्वदीप्त्या भस्मीकृत्य संदह्य विभिद्येत्यर्थः स्वपदकमलयोः स्वस्यात्मनः श्रीपरदेवतायाः पदकमलयोः सहस्राराब्जकर्णिकाबिन्दुस्थश्रीपदाब्जयोः प्रह्वशिरसां प्रणतानां स्वोपासकानां श्रीगुरुकृपाकटाक्षपातेन प्रतिलब्धयोगाभ्यासयुक्त्या भ्रूभेदनक्रमासादित सर्वोर्ध्वभूमिकानां, अथच स्वपदं कुलकुण्डाख्यं तत्र यत् कमलमकुलसंज्ञं तस्मिन् प्रह्वशिरसां निर्विभागभावनयैकीभावमापन्नानामित्यर्थः । शिवश्च शिवाच शिवौ तयोःशिवयोरिदं शैवं शिवशक्तिसामरस्यानन्दचमत्कारनिर्भरं किमपि शिवशक्त्यादिनियतव्यपदेशासहिष्णुस्वसंवेद्यं वपुरनाख्यस्वरूपं वितन्वानो निष्पादयन् कीदृशं इन्दीवररुचि नीलोत्पलकान्ति । एतेन त्रयाणां मायीयधाम्नां सामस्त्यात्मकत्वाद्भेदापक्षयेण श्यामरूपत्वमुक्तम् । यद्वा पुंलिङ्गान्तविशेषणं तथा कुचाभ्यामहन्तेदन्तापरामर्श-

*१. 'तव' इत्यपि पाठः ।

CC-0 Kashmir Research Institute. Digitized by eGangotri

लक्षणाभ्यां श्रीसदाशिवादिदशोचिताभ्यामानम्रः क्षितिपर्यन्तं वेद्यौन्मुखेन प्रह्वीभूतः प्रवणः प्रसृत इत्यर्थः। एवंरूपः शिवस्य श्रीकामेश्वरस्य पुरुषकारः पौरुषीशक्तिराहोपुरुषिकात्मा कुण्डलिनीपदमवतीर्णा विजयते पूर्णाहन्ताविमर्शात्मस्वात्मसाम्राज्यस्वभावेन राजते। एतदुक्तं भवति - कुण्डलीशक्त्युपासनापरो गुरूक्तयुक्त्या मत्तगन्धसङ्कोचपूर्वं मध्यधामानुप्रविश्य तथा प्रलयार्कसमरुचा जन्माधारादिचक्रकाननं भित्त्वा सर्वोर्ध्वपदस्थपरशिवसायुज्यमेति, इत्येतदेव पौरुषं शक्तिस्वभावं स्वोपासकानां शिवप्राप्तिकारित्वाद्विशिष्टमिति स्वपदेत्यादिनाभिहितं बोध्यम्। शक्तिरेव प्रवेशोपायद्वारमित्यागमेष्वाम्नातम्। श्रीविज्ञानभैरवे—

शक्त्यवस्थाप्रविष्टस्य निर्विभागेन भावना।
तदासौ शिवरूपी स्याच्छैवीमुखमिहोच्यते ॥ (२० श्लो.)

अथवा षडध्वानः-मन्त्राध्वा-वर्णाध्वा-पदाध्वा-तत्त्वाध्वा-कलाध्वा-चेति, तेषु वाच्यवाचकात्मकेषु त्रयो विमर्शांशाः। तदुक्तं विरूपाक्षपञ्चशिकायाम्—

"यस्य विमर्शकणः पदमन्त्रार्णात्मकस्त्रिधा शब्दः।
पुरतत्त्वकलात्मार्थो धर्मिण इत्थंप्रकाशस्य ॥

सौभाग्यहृदयस्तोत्रेऽपि—

वर्णः कला पदं तत्त्वं मन्त्रो भुवनमेव च।
इत्यध्वषट्कं देवेशि ! भाति त्वयि चिदात्मनि ॥

इत्येतत्प्राक् प्रपञ्चितम्। "सर्वतत्त्वमयः कायः" इति त्रिशिरोभैरवोक्तनीत्याग्राह्यग्राहकभागत्रैविध्येन स्थितः षडध्वात्मा कायस्तद्रूपं महद्वनं प्रलयार्ककोटिप्रतिरुचा रुचार्कादितेजोऽवभासयित्र्या जाज्वल्यमानपरसंविद्दीप्त्या भस्मीकृत्य स्वात्मसाद्भावेन विलाप्य, तदुक्तम्—

CC-0 Kashmir Research Institute. Digitized by eGangotri

यत्र सर्वे लयं यान्ति दह्यन्तेतत्वसंचयाः ।
तां चितिं पश्य कायस्थां कालानलसमप्रभाम् ॥इति॥

एवं देहाद्याभासशन्त्यां स्वपदकमलप्रह्वशिरसां सङ्कोचविकासमयचरणविद्यापरिशीलिनामतएवानुत्तरचिदानन्दघनभैरवीयविततकाशसमावेशनेन "शैवामुखमिहोच्यते" इत्युक्तेः । उपायतया शक्तिरेवानुग्रहमयी शैवं वपुर्वितनुते इति, अन्यत् समानम् । अत्र कुचशब्देनेच्छाज्ञानात्मना शाम्भवशाक्तोपायमार्गेणापि भक्तानामुद्धारणाय प्रसृतेयमित्युच्यते । इत्येवमत्र दाहादिचिन्तनयुक्त्याग्नेयी धारणापि सूचिता । तदुक्तं विज्ञानभैरवे—

कालाग्निना कालपदादुत्थितेन स्वकं पदम् ।
प्लुष्टं विचिन्तयेदन्ते शान्ताभासः* प्रजायते ॥ (५२ श्लो.)

इति । तथा शिवसूत्रम्–शरीरे संहारः कलानाम् । (३-४) इतिसंवित्क्रमार्थः ॥११॥

ननु कथं शक्त्युपासनाक्रमेण परमशिवधामलाभ इत्याशङ्क्य "प्राक् संवित्प्राणे परिणता" इति नीत्या प्राणाद्यस्फुरत्तात्मकशक्तिकुण्डलिनीप्रबोधपूर्वं कौलिकप्रक्रियोक्ताधारादिभेदेन क्रमेणाकुलपदप्रवेशः स्यादित्याशयेनाह—

**प्रकाशानन्दाभ्यामविदितचरीं मध्यपदवीं**
**प्रविश्यैतद्द्वन्द्वं, रविशशिसमाख्यं कवलयन् ।**
**प्रविश्योर्ध्वं नादं लयदहनभस्मीकृतकुलः**
**प्रसादात्ते जन्तुः शिवमकुलमम्ब ! प्रविशति ॥ १२ ॥**

---

*१. 'शान्ताभासस्तदा भवेत्' मु. पु. पाठः ।

CC-0 Kashmir Research Institute. Digitized by eGangotri

सन्तापकारिस्वभावत्वात्प्रकाशः सूर्यः, आह्लादकारित्वादानन्दः सोमस्ताभ्यां प्राणापानात्मकाभ्यां पूर्वमविदितामविदितचरीं प्रागज्ञातां तदुभयसंघट्टनात्पूर्वं तयोः स्वरसवहनेन मध्यवाहान्तः प्रवेशासम्भवान्मध्यपदाज्ञानादित्यर्थः। 'भूतपूर्वे चरट्' (५-३-५३) मध्यपदवीं सुषुम्नां दिव्यमार्गसंज्ञकां सद्गुरुप्रदर्शितकेवलकुम्भकात्मप्राणसंयमनादियुक्त्या एतद्द्वन्द्वं प्रकाशानन्दयुगलं प्रवेश्य प्रवेशं कारयित्वान्तर्नीत्वा "शुचिर्नामाग्निरुद्भूतः संघट्टात् सोमसूर्ययोः" इतिनीत्या रविशशिसमाख्यं रविशशिनौ प्राणापानौ समौ मिलितावाख्यायेते यत्र तं तत्संघट्टजनितमुदानवह्निं कवलयन्नूर्ध्वरेचकेन चक्रभेदनपुरस्सरं ग्रसन् स्वैक्येन विमृशन् केवलकुम्भकलक्षणं यथा त्रिपुरासारसमुच्चये—

इह रेचकपूरकौ विहाय
स्थिरधीः कुम्भकमेव केवलं यः।
सततं कुरुते मनोजवत्वं
लभते वीतजरामयः स मर्त्यः॥
नहि तस्य सुदुर्लभं त्रिलोक्या-
मिह यःकेवलकुम्भके निषण्णः।
अणिमादिगुणाष्टकं करस्थं
ननु तस्यैव निरस्तमृत्युभीतेः॥
राजदन्तयुगलादिमस्पृशन्
सन्निधाप्य रसनां तदन्तिके।
काकचञ्चुपुटमारुतं पिबेत्
प्राणसंयमनमेतदुत्तमम्॥ (३ प० श्लो. ३२-३३-३४)

इत्यादि। तथा—हूङ्कारेण गुरूपदिष्टविधिना प्रोत्थाप्य सुप्तां ततः
कृत्वा तां कलया तथा परमया चिद्रूपया सङ्गताम्।

CC-0 Kashmir Research Institute. Digitized by eGangotri

मायां कुण्डलिनीं समाहितमनास्तामुच्चरेत्कौलिकीं
शक्तिं ब्रह्ममहापथेन सहितामाधारतः स्वात्मना ॥

इत्याद्युक्तप्रकारेणोर्ध्वमुपरि हृत्स्थं नादं सततोदितं स्वयमुच्चरद्रूपत्वादनाहतभट्टारकं प्रविश्य देहादिमितप्रमातृभावप्रशमनपूर्वकं तादात्म्येनानुसन्धाय तत्रैव लयदहनेन चित्तप्रलयीकरणात्मनाग्निना भस्मीकृतं कुलमाधारषोडशक ग्रन्थिद्वादशकात्मदेहाद्याभासो येन सः । यदुक्तम्—

नादाख्यं यत्परं बीजं सर्वभूतेष्ववस्थितम् । इति ।

तथा—

नास्योच्चारयिता कश्चित्प्रतिहन्ता न विद्यते ।
स्वयमुच्चरते देवः प्राणिनामुरसि स्थितः ॥ इति ।

श्रीमत्कुलगह्वरेऽपि—

यत्तदक्षरमव्यक्तं कान्ताकण्ठे व्यवस्थितम् ।
ध्वनिरूपमनिच्छं तु ध्यानधारणवर्जितम् ॥
तत्र चित्तं समाधाय वशयेद्युगपज्जगत् ॥ इति ।

हे अम्ब ? ते तव प्रसादादनुग्रहाच्छक्तिपातलक्षणादुक्तलययोगयुक्तो-जन्तुरनुजिघृक्षास्पदीभूतोऽकुलं षट्त्रिंशत्तत्त्वलक्षणकुलादन्यत्तदुत्तीर्णं परमशिवाख्यं चिदानन्दघनानुत्तरपरसंविन्मयं ध्रुवधाम प्रविशति वेधयेत् पूर्णया वृत्त्या तत्समावेशभाग्भवतीत्यर्थः । तदुक्तं—

'अत्रतत्पूर्णवृत्त्यैव विश्वावेशमयं स्थितम् ।
प्रकाशस्यात्मविश्रान्तावहमित्येव मृश्यताम् ॥' इति ।

अत्र तत्प्रवेश एव परमसिद्धिरूपा मुक्तिरित्यावेदितम् ॥१२॥

CC-0 Kashmir Research Institute. Digitized by eGangotri

ननुवैराग्यमेव परं मुक्तिकारणमिति सर्वत्रोक्तं तेनैव मुच्येरन्नित्याशङ्क्य पराशक्त्यनुग्रहादृते वैराग्यादेःकस्यचनापि वस्तुनो नैव साक्षान्मोक्षोपायकलनेत्याशयेनाह—

**मनुष्यास्तिर्यञ्चो मरुत इति लोकत्रयमिदं**
**भवाम्भोधौ मग्नं त्रिगुणलहरीकोटिलुठितम् ।**
**कटाक्षश्चेदत्र क्वचन तव मातः ! करुणया**
**शरीरी सद्योऽयं व्रजति परमानन्दतनुताम् ।। १३ ।।**

मनुष्या मानवास्तिर्यञ्चो गवाश्वप्रभृतयः पशवो मरुतो विद्याधरगन्धर्वादयो देवयोनय इतीदं लोकत्रयं लोकयन्तीति लोकाः प्राणिनः प्रमातार इत्यर्थस्तेषां त्रयं त्रयोलोका इत्यर्थः, कीदृशं भवे जन्ममरणादिलक्षणसंसाररूपेऽम्भोधावपारत्वादानन्त्याच्च समुद्रसदृशे मग्नं त्रुडितं मोहितं येनास्य स्वतन्त्रचिद्घनस्वात्मशिवात्मतापरामर्शवैमुख्यं स्यात् । तदुक्तं लक्ष्मीकुलार्णवे—

स्वयम्भूर्भगवान् देवो जन्मसंस्कारवर्जितः ।
निर्विकल्पं परं धाम अनादिनिधनं शिवम् ॥
प्रत्यक्षं सर्वजन्तूनां नच पश्यति मोहितः ॥ इति !

गुणशब्देन तद्वृत्तिपरिणामग्रहणं तेन त्रिगुणानां सत्त्वादिगुणत्रयवृत्तीनां सुखदुःखमोहरूपाणां लहरीणां कल्लोलानां कोटिषु कोटिसंख्यासु धारासु च लुठितं परिवर्तमानमस्ति "मोहप्रतिसंहतस्तु कर्मात्मा"(३-३५) इति शिवसूत्रोक्तनीत्या ज्ञानैकघनतया पुण्यापुण्यकलङ्कितत्वाद् दुःखैकभाजनमेव । तदुक्तं कालिकाक्रमे—

यदविद्यावृततया विकल्पविधियोगतः ।

CC-0 Kashmir Research Institute. Digitized by eGangotri

शिवादीन्नैव झटिति समुद्भावयतेऽखिलान् ॥

ततः शुभाशुभा भावा लक्ष्यन्ते तद्वशत्वतः ।

अशुभेभ्यश्च भावेभ्यः परं दुःखं प्रजायते ॥

इति । अयं भावः—सर्वे खलु प्राणिनः शक्तिदारिद्र्याच्चादाणवमायीयकार्माख्य-त्रिविधमलावृत्ततयापरिमितकालं योनेर्योन्यन्तरं भ्राम्यन्ते आपारमेश्वरशक्ति-पातं संसाराद्विरतिं नाप्नुवन्ति कथञ्चिदासादिते शक्तिपाते तु परचित्स्वभाव-प्रथाप्राप्तौ संसारादपवर्गं भजन्तीति । तदाह—हे मातर्जननि ! इत्यनेन भवा-ब्धिमग्नायाःस्वप्रजायाः कारुण्यादुद्धरणं तव मातुरुचितं नोपेक्षाकरणमिति-द्योतितम् । अत्रास्मिन् मनुष्यादिलक्षणे क्वचन कुत्रचित्तदन्यतमे प्राणिनि (यथा गजेन्द्रे) करुणया दयया तव कटाक्षो निरपेक्षशक्तिपातलक्षणकृपापाङ्गा-लोकश्चेद्यदि स्यात्, तदायं शरीरी संसारी सद्यः सपदि हठशक्तिपातसमकाल-मेव विकल्पहानाद्युपायपरिशीलनेन संविद्विकासात्परमानन्दतनुतां पौनःपुन्येन चिदैक्यामर्शात्पूर्णानन्दस्वभावसमापत्तिरूपां जीवन्मुक्तिं व्रजति प्राप्नोति । तदुक्तं प्रत्यभिज्ञायाम्—

विकल्पहानेनैकाग्र्यात्क्रमेणेश्वरतापदम् (४-१-११) इति । स्पन्देऽपि-

"यदा क्षोभः प्रलीयेत तदा स्यात् परमं पदम्" (१ नि० ९ का०)

इति । देहप्राणनीलादिष्वाभासभानेष्वपि चिदभेदप्रथायामेव जीवन्मुक्तिरूपा परमानन्दता युक्तेति शरीरीत्यनेन सूच्यते । तथा च शक्तिसूत्रम्—

चिदानन्दलाभे देहादिषु चेत्यमानेष्वपि चिदैकात्म्यप्रतिपत्तिदार्ढ्यं जीवन्मुक्ति-रिति । तथा-तद्विमुक्तस्तु केवलीति ।

स्पन्दशास्त्रेऽपि—

इति वा यस्य संवित्तिःक्रीडात्वेनाखिलं जगत् ।

CC-0 Kashmir Research Institute. Digitized by eGangotri

स पश्यन् सततं युक्तो जीवन्मुक्तो न संशयः ॥ (३ नि० ३ का०)

इति । यद्वा सद्यो झटित्यकस्मादुपायपरिशीलनोल्लंघनेनातितीव्रशक्तिपाताघ्रातत्वात् क्रमोल्लङ्घनवृत्त्या वा परमानन्दतनुतां व्रजति निरावरणनिर्निकेतचिद्व्योमाकारतां समाविशति । तदुक्तं योगिनीसूत्रे—

"महासाहसवृत्त्या स्वरूपलाभः" इति । एतदुक्तंभवति

सर्वमेतज्जन्तुचक्रमनाद्यविद्यावासनोपप्लुतत्वादपारे मायाम्भोधौ परिवर्तमानं सत् पारं मायोत्तीर्णशिवपदलक्षणं नायाति । तत्र यदि क्वचिदनुग्रहैकमयी त्वद् दृग्निपतेत्तदा स मुच्यते । अन्यथा जवंजवीभावादनन्तदुःखास्पपदजन्ममरणादिभ्यो न विरतिमेतीत्यतो भगवत्येव मुमुक्षुभिरपिदेवतान्तराश्रयणपरिहारेणावश्यं सेव्येति ॥१३॥

इदानीं देवतान्तरापेक्षया स्वभावत एव भगवती स्वोपासकेभ्योऽभीष्टार्थदानचतुरेति लोकप्रसिद्धकल्पलतारोपणया श्रीविद्याकल्पलताख्यां परामृशति—

**प्रियङ्गुश्यामाङ्गीमरुणतरवासः किसलयां**
**समुन्मीलन्मुक्ताफलबहुलनेपथ्यकुसुमाम् ।**
**स्तनद्वन्द्वस्फारस्तबकनमितां कल्पलतिकां**
**सकृद्ध्यायन्तस्त्वां दधति शिवचिन्तामणिपदम् ॥१४॥**

हे मातरिति पूर्वश्लोकादनुकर्षणीयम् । प्रियङ्गोः फलिनीलताया इव श्यामानि श्यामवर्णान्यङ्गानि मुखपाण्याद्यवयवा यस्यास्तां, तथारुणतराण्यारक्तवर्णानि वासांसि दिव्यांशुकानि किसलयानि नवपल्लवा इव यस्याः, समुन्मीलन्त्यो विस्फुरन्त्यो मुक्ता मुक्तारत्नानि फलानीव यस्याः सा, कल्पलताया रत्नमयत्वात् । तथा बहुलानिबहूनि नेपथ्यानि वेशाः वेशरचनादिकृतशोभा वा कुसु-

CC-0 Kashmir Research Institute. Digitized by eGangotri

मानि पुष्पाणीव यस्याः, अत्र द्वयोर्विशेषणयोः कर्मधारयः । तथा स्तनद्वन्द्वं कुचयुग्मं स्फारौ पृथुलौ स्तबकौ विकासोन्मुखकलिकाकारौ पुष्पादिगुच्छकाविव ताभ्यां नमितामाभुग्नां कल्पलतिकां पञ्चकल्पलतास्वाद्यां श्रीविद्याकल्पलतासंज्ञकां कल्पवल्लीमिव अभीष्टार्थदायित्वात् त्वां पराम्बां सकृदेकवारं ध्यायन्तः स्मरन्तः शिवस्य चिदानन्दघनपरमानुत्तरस्वरूपस्य चिन्तामणेरिव पदं स्थानं दधति धारयन्ति । कल्पलतायाः सन्निहितानामपि तत्स्मरणादेव चिन्तितरत्नप्राप्तिः श्रूयते । शिवं चिन्तामणिमिव पारमार्थिकं पदं वस्तु दधतीति वा बोध्यम् । शैव्यैवोपायभूतया शिवप्राप्तेरागमेषूद्घोषितत्वात् । अतस्त्वद्ध्यानोपायनिषेविणामुपेयेऽनुत्तराकुलधाम्नि त्वन्मुखेन समावेशलाभःसुकरः । अत्र कल्पलतामिवेत्यौपम्येनोपमेयवर्णनस्य विवक्षितत्वादिवशब्द आक्षेप्यः । तदुक्तं श्रीविद्यर्णवतन्त्रे—

अथ वक्ष्येमहेशानि ! विद्याः कल्पलताः प्रिये ! ।
यासां विज्ञानमात्रेण पलायन्ते महापदः ॥
श्री विद्यापारिजातेशी पञ्चकामेश्वरी तथा ।
पञ्चबाणेश्वरी देवी कुमारी पञ्च कीर्तिताः ॥ (१भाग ७श्वास श्लो- १–२ पृष्ठ सं० १६२)

इति । अधुनोपासाविधीनां सर्वेषां शेषभावेनाङ्गिनः परनादभट्टारकोपासनस्यैवाव्यवहिततया परमोपादेयधामविश्रान्तिप्रदत्वमित्याह—

**षडाधारावर्तैरपरिमितमन्त्रोर्मिपटलै-**
**श्चलन्मुद्राफेनैर्बहुविधलसद्दैवतझषैः ।**
**क्रमस्त्रोतोभिस्त्वं वहसि परनादामृतनदी**
**भवानि ! प्रत्यग्रा शिवचिदमृताब्धिप्रणयिनी ॥ १५ ॥**

CC-0 Kashmir Research Institute. Digitized by eGangotri

—षट्संख्याका आधाराश्चक्राणि—नाडिमायायोगि भेदन दीप्तिशान्ताख्यानि । तदुक्तम्—

............षट्चक्रमधुनोच्यते ।
जन्माख्ये नाडिचक्रन्तु नाभौ मायाख्यमुत्तम् ॥
हृदिस्थं योगिचक्रं तु तालुस्थं भेदनं स्मृतम् ।
बिन्दुस्थं दीप्तिचक्रं तु नादस्थं शान्तमुच्यते ॥

इति । अथ च षट्शब्दोपलक्षिताः षोडश अङ्गुष्ठ–गुल्फ–जानु–मेढ्र–पायु–कन्दनाडि–जठर–हृत्–कूर्मनाडी–कण्ठ–ताल-भ्रूमध्यललाट-ब्रह्मरन्ध्र–द्वादशान्ताख्या जीवाधारकत्वादाधाराः । यदि वा कुलप्रक्रियानीत्या कुलाद्यभिधाः । यदुक्तं—

"*मेढ्रस्याधः कुलो ज्ञेयो मध्ये तु विषसंज्ञितः ।
मूले तु शाक्तः कथितो बोधनादप्रवर्तकः ॥
अग्निसंज्ञस्ततश्चोर्ध्वमङ्गुलानां चतुष्टये ।
नाभ्यधः पवनाधारो नाभावेव घटाभिधः ॥
नाभिहृन्मध्यमार्गे तु सर्वकामाभिधो मतः ।
सञ्जीवन्यभिधानाख्यौ हृत्पद्मोदरमध्यगः ॥
वक्षः स्थले स्थितः कूर्मो गले लोलाभिधः स्मृतः ।
लम्बकस्य स्थितश्चोर्ध्वे सुधाधारः सुधात्मकः ॥
तस्यैव मूलमाश्रित्य सौम्यः सोमकलावृतः ।
भ्रूमध्ये गगनाभोगे विद्याकमलसंज्ञितः ॥
रौद्रस्तालुतलाधारो रुद्रशक्त्या त्वधिष्ठितः ॥

*इति १६ शे आह्निके १६ श्लोके तन्त्रालोकटीकायां क्षेमराजः ।

CC-0 Kashmir Research Institute. Digitized by eGangotri

चिन्तामण्यभिधानाख्यश्चतुष्पथनिवासि यत् ॥
ब्रह्मरन्ध्रस्य मध्ये तु तुर्याधारस्तु मस्तके ।
नाड्याधारः परः सूक्ष्मो घनव्याप्तिप्रबोधकः ॥
इत्युक्ताः षोडशाधाराः" (त. आ. १९ आ० पृष्ठ १८८-८९)

इति । तेषु आवर्ता आ जवंजवीभावेनोर्ध्वोऽधः सञ्चारास्त एवावर्ता अम्भसां चक्राकारभ्रमणानि यद्वा षडाधारविद्याः । अत्राधारशब्देनाधेयविद्यानां तात्स्थ्याद् ग्रहणम् । ता यथा-आज्ञायां परमेश्वरमिथुनविद्या, विशुद्धौ विच्चेश्वरमिथुनविद्या हृदि हंसेश्वरमिथुनविद्या, स्वाधिष्ठाने संवर्तेश्वरमिथुनविद्या, मणिपूरे द्वीपेश्वरमिथुनविद्या, मूलाधारे नवात्मेश्वरमिथुनविद्या इत्यूर्ध्वाम्नायक्रमोक्ता । अन्यत्र तु षडाधारस्था डाकिन्यादियोगिन्यस्तासां विद्याः पद्धत्यादौ प्रसिद्धास्तद्रूपा आवर्ता अम्भोभ्रमास्तैः । एतेन साधकानां सुचिराय तदुपासनासु भ्रमणाद् दुःखैकपर्यवसानत्वमिति सूचितम् । तथाऽपरिमिता असंख्या मन्त्रास्तत्तद्विद्यात्मानस्तत्र मूलविद्यायाः प्रथमं कादिहादिमतभेदेन द्वैविध्यम् । तदनु मन्वाद्युपासिततया पञ्चविंशतिधात्वम् । जाग्रदादिकलाभेदेन षोडशी भेदाः, भाषासृष्ट्यादिभेदाः, पञ्चमी मधुमतीस्वप्नावत्यादिभेदाः, श्रीषोडश्यास्तुर्यतुर्यातीतात्मिकायास्तुरीयकलाभेदेन प्रकारान्तराणि, एवमुक्तभेदानां शुद्धा अशुद्धाः शुद्धाशुद्धाः शवला इति चातुर्विध्यम् । तदुक्तं श्रीविद्यार्णवे—

भेदाः पूर्वोक्तरीत्या च ज्ञातव्यास्तन्त्रकोविदैः ।
शुद्धाशुद्धविभेदेन द्विविधाः परिकीर्तिताः ॥
उभयात्मकभेदाश्च शवलाश्च तथैव च ।
अनुलोमाश्च या विद्याः शुद्धाःस्युःप्रतिलोमजाः ।
अशुद्धा इतिविज्ञेया उभयात्मान एव च ।
शुद्धाशुद्धाश्च शवला व्यत्यस्तव्याकुलक्रमात् ॥

CC-0 Kashmir Research Institute. Digitized by eGangotri

एवं चतुर्विधा विद्या विज्ञेया देशिकोत्तमैः। (१भाग ७श्वास श्लो.७-८-९-१० पृष्ठ सं० १५२)

इति। इयं तावदेकैव श्रीविद्यानेकधा, पञ्चसिंहासनविद्यापञ्चपञ्चिकाविधा दर्शनायतनसमयादिविद्याभिः सचरणनित्यावरणाभिरानन्त्यमश्नुवाना का कथा विद्यान्तराणाम्। एवमपरिमिता मन्त्रास्तद्रूपाण्यूर्मिपटलानि तरङ्गसमूहास्तैः, एतेनोत्तरोत्तरविद्यान्तरारूढौ साधकचेतोविक्षोभादनवस्थितत्वमितिसूचितं भवति। तथा चलन्तःस्पन्दमाना मुद्राःकराङ्गुलिसन्निवेशात्मानः संक्षोभिण्याद्याः करङ्किण्याद्या वा तद्रूपाः फेना अब्धिकफास्तैः। तदुक्तं चतुःशत्याम्—

संक्षोभद्रावणाकर्षवश्योन्मादमहाङ्कुशाः।
खेचरीबीजयोन्याख्या नव मुद्रास्त्वनुक्रमात्॥

एतेन मुद्रासु तुच्छत्वमन्तःरिक्तफेनप्रायत्वादितिसूचितम्। तथा बहुविधानि नानाप्रकाराणि लसन्ति विराजमानानि स्वरश्मिरूपावरणदेवतावृन्दानि, अन्तस्त्रिकोणमारभ्य बाह्यचतुरस्रपर्यन्तं स्थितानि कामेश्वर्यादीनि, अन्तःपूजायां विशुद्धादिचक्रस्था डाकिन्याद्या धातुदेवताश्च तद्रूपा झषा मत्स्यास्तदाश्रयत्वान्नद्याः, तैः। एतेन तत्तद्देवतास्थानानि अन्तरान्तरा भोगभूमयः क्षणमात्रसन्तोषकारिण्यः भोग्यविषयात्मकझषप्रायत्वादित्यभिहितम्। तथा क्रमास्तत्तदाम्नायोक्तपद्धतिनिबन्धाः सृष्ट्याद्यात्मानो वा स्वस्वसंप्रदायोक्तपूजाप्रकारविधयस्तद्रूपाणि स्रोतांस्यम्बुवेगाः, अनेन क्रमोपासनावतामुपेयपदं प्रति निर्विबन्धं द्रुतगतित्वमस्तीति सूच्यते। एतैः सर्वैः पूर्वोक्तैर्विशेषणैरुपलक्षिता हे भवानि? इति प्राग्वत् त्वं प्रत्यग्रापूर्वत्वात् सदाभिनवा कालेनाकाल्यत्वाच्चाशेषवाच्यजातं क्रोडीकृत्याशेषवाचकग्रामसामान्यध्वन्यात्मया परनादोऽकृतकपूर्णाहन्ताविमर्शात्मकः तद्रूपामृतनदी सुधारसतरङ्गिणी वहस्यनवरतं स्रवसि। यद्वा परनादो निष्कलकामकलाक्षरं शाक्ताक्षरात्मकं सत्सम्प्रदायवद्गुरुमुखैकवेद्यं।

CC-0 Kashmir Research Institute. Digitized by eGangotri

तदुक्तम्—

शीर्षपाणिचरणैर्विवर्जितं ह्यक्षरं भवरुजापहं परम् ।
यस्य हृत्कुहरगं प्रवर्तते तेन मृत्युरपि भस्मसात्कृतः ॥
शून्यात्प्रसरमुत्पन्नं प्रसरोत्थमकालकम् ।
अकालात्तत्त्वमुत्पन्नं विश्वं यत् पञ्चधास्थितम् ॥
ध्यानस्थानविहीनो यो रूपोच्चारविवर्जितः ।
अनाहतो नदत्यन्तर्मुखान्मुखपदेस्थितः ॥

इति । श्रुतिश्च—

ऋचो अक्षरे परमेव्योमन् यस्मिन् देवा अधिविश्वे निषेदुः । यस्तन्न वेद किमृचा करिष्यति य एतद्विदुस्त इमे समासते । (ऋक्सं. अ. २–३–२१=मं० १–१६४–३९) इति ।

कीदृशी शिवचित् विश्वोत्तीर्णविश्वमयानुत्तरपरमशिवप्रकाशः स एवामृताब्धिः सुधारससमुद्रस्तत्र प्रणयिनी स्नेहवती समवायसम्बन्धेन तदाश्लिष्टेत्यर्थः । यद्वा प्रणयः प्रापणं सोऽस्या अस्तीति प्रणयिनी स्वभक्तिनौकारूढानां तत्प्राप्तिकारिणीत्यर्थः, नद्यपि प्रवहन्ती समुद्रगा तत्प्राप्तिकारिणी तद्द्वारासमुद्रप्रवेशप्रसिद्धेः । एवं परनादोपासनाद्वारा शिवप्राप्तिः । यद्वा—अनन्तशक्तिवृन्दोदयविलयस्थानं स्वहृदयोद्योगस्वभावस्वतन्त्रपरभैरवात्मा शिवचिच्छिवस्फुरत्ता, एतेन विश्वोत्तीर्णशिवतत्त्वमित्यभिप्रेतम् । तदुक्तं विज्ञानेन्दुकौमुद्याम्—

सर्वव्यापकताभूमिर्ज्ञत्वकर्तृत्वसंमता ।
निजाभावचमत्कारमयी शिवदशा स्मृता ॥ इति ।

शिवदृष्टौ च—

CC-0 Kashmir Research Institute. Digitized by eGangotri

आत्मैव सर्वभावेषु स्फुरन्निर्वृ तचिद्वपुः* ।
अनिरुद्धेच्छाप्रसरः प्रसरद्दृक्क्रियः शिवः ॥ (आ. १ श्लो. २)

इति । स एष दुर्लक्ष्यत्वेन गम्भीरत्वादिच्छादिप्रमुखप्रसरद्विश्वतरङ्गाकरत्वाद्विश्वप्रतिबिम्बसहिष्णुतया स्वच्छन्दत्वात्तदनावृतत्वादित्यादिधर्मयोगादमृताब्धिस्तत्र प्रणयवती तदैकात्म्येन प्रस्फुरन्तीत्यर्थः ॥१५॥

पराकाशस्वरूपापेक्षातस्त्वदीयमष्टमूर्त्यवच्छिन्नं वैश्वरूप्यमत्यल्पमित्यपरिच्छिन्नब्रह्मस्वभावं प्राप्यमधिकरणभावेन परामृशति—

**महीपाथोवह्निश्वसनवियदात्मेन्दुरविभि-**
**र्वपुभिर्ग्रस्तांशैरपि तव कियानम्ब ! महिमा ।**
**अमून्यालोक्यन्ते भगवति ! न कुत्राप्यणुतरा†-**
**मवस्थां प्राप्तानि त्वयि तु परमव्योमवपुषि ॥१६॥**

मही क्षितिः, पाथो जलं, वह्निरग्निः, श्वसनो वायुर्वियदाकाशः, आत्मा यजमानः, इन्दुश्चन्द्रो, रविरर्कस्तैस्तव वपुर्भिर्मूर्तिभः—

"क्ष्मावह्नियजमानार्कजलानिलनिशाकराः ।
खं चेति मूर्तयश्चाष्टौ"

इत्यमूभिरष्टमूर्तिभिर्देव्येव विलसन्तीत्यर्थः । यदग्रे स्तोष्यते—

भुवि पयसि कृशानौ मारुते खे शशाङ्के
सवितरि यजमानेऽप्यष्टधा शक्तिरेका ॥ (३८‡ श्लो०)

इति । लैङ्गेऽपि—

*चिद्विभु इति मु. पु. पाठः । †१. 'तमां' पाठः । ‡पञ्चस्तवी ५म स्तवः ।

CC-0 Kashmir Research Institute. Digitized by eGangotri

पञ्चभूतानि चन्द्रार्कावात्मेति मुनिपुङ्गवाः ।
मूर्तीरष्टौ शिवस्याहुर्देवदेवस्य शूलिनः ॥
आत्मा तस्याष्टमीमूर्तिर्यजमानाह्वयः परः । इति । (उपरिभाग* अ. १२ श्लो० ४२ पृ० २२४)

स्वायम्भुवे मन्वन्तरे सृष्ट्यारम्भे ब्रह्मा नीललोहितनामानं कुमारं जनयामास, तं रुदन्तमष्टभिर्नामधेयैरलञ्चक्रे, तस्य मूर्तीः प्रार्थयमानस्य भूम्याद्याः पञ्च यजमानसोमसूर्याख्यास्तिस्रोऽदात् स ताः प्राविशत्, तेनाष्टमूर्तिर्भगवाञ्छिवस्तदभिन्नायाः शक्तेरप्यष्टमूर्तित्वमितीदं व्याख्यानं ब्रह्माण्डपुराणेऽनुषङ्गपादे दशमाध्याये विस्तरतः प्रपञ्चितम् । कीदृशैः ग्रस्ताः कवलिताः स्वान्तःक्रोडीकृता अंशाः कार्यरूपाः प्रातिस्विकतात्त्विकविकृतिभागा यैर्गर्भीकृतस्वस्वांशैरपि हे अम्ब ! तव तव कियान् महिमा किंप्रमाणं महत्वं माहात्म्यमपरिमितमित्यर्थः । वैश्वात्म्यप्रथायां तावन्महिम्नस्त्वदीयस्यानन्त्याद् बहुना कालेन केनापि परिच्छेत्तुमशक्यत्वात् । विश्वोत्तीर्णावस्थायान्तु त्वयि परमव्योमवपुषि सर्वोत्तीर्णशून्यातिशून्यात्मपरमाकाशमूर्तौ सत्यां हे भगवति परस्वातन्त्र्यशालिनि ! अमूनि पृथिव्यादीन्यष्टवपूंषि सुमहान्ति कुत्रापि क्वचिदपि नालोक्यन्ते दृग्विषया न भवन्ति । हेतुभावेन विशेषणमाह—अवस्थामिति, यतोऽणुतरामतिसूक्ष्मां दशां प्राप्तानि, विततपरमाकाशभूमापेक्षया तन्महत्वस्याणुतरत्वप्रतिभासात् । तदुक्तं कुलशेखरराजेन—

पृथ्वीरेणुरणुः पयांसि कणिकाः फल्गुःस्फुलिङ्गोलघु-
स्तेजो निश्वसनं मरुत्तनुतरं रन्ध्रं सुसूक्ष्मं नभः ।
क्षुद्रा रुद्रपितामहप्रभृतयः कीटाः समस्ताः सुरा

---

*लिङ्गपुराणं १८१२ शकाब्दे कलिकातायां प्रकाशितम् श्री पञ्चाननतर्करत्नेन सम्पादितम् ।

CC-0 Kashmir Research Institute. Digitized by eGangotri

दृष्टे यत्र स तावको विजयते भूमावधूतावधिः ॥ (मु. माला श्लो१२)

इति, तु पक्षान्तरे ॥१६॥

नन्वागमान्तरेष्वन्यान्यदेवताः पूजनीयतयाभिधीयन्ते, किं सकलजननी प्रस्तूयमाना तदङ्गभूता काचिदस्तीत्याशङ्कयागमिकैस्तत्तदन्वर्थागमभाषाभिः सैव निरुच्यते इत्याशयेन स्तुवन्नाह—

**कलां प्रज्ञामाद्यां* समयमनुभूतिं समरसां**
**गुरुं पारम्पर्यं विनयमुपदेशं शिवकथाम् ।**
**प्रमाणं निर्वाणं परममतिभूतिं परगुहां**
**विधिं विद्यामाहुः सकलजननीमेव मुनयः ॥१७॥**

मुनयो मननशीलाः, मननञ्च शब्दराश्यात्मकपूर्णाहन्तापरामर्शनं ते महामन्त्रानुसन्धानवन्तो महामाहेश्वराः सकलजननीमेव सकलस्य शिवादिपृथिव्यन्ताशेषचिदचिद्रूपस्य जगतः, सकलस्य सदाशिवभट्टारकस्य वा जननीमुत्पादयित्रीं पराशक्तिमेवैतैर्नामभिर्वक्ष्यमाणैराहुः स्तुवन्ति विमृशन्तीत्यर्थः । तदाह कलामिति—कलयतीति कला पञ्चधाकलनात्मककृत्यकारिणी अनाश्रिताख्या पराशक्तिः, तच्च कलनं मयूराण्डन्यायेन स्वान्तरैक्यरस्येनावस्थितस्य स्वस्माद् दर्पणप्रतिबिम्बवद् बहिरुल्लासनं क्षेपः, तथोल्लासितस्य स्वाभेदेन परामर्शोऽविकल्पनात्मा । भेदेनाभासितस्यैव नीलादेरर्थस्यान्योन्यापोहनादिदमिदं नानिदमिति प्रतिनियततयावस्थापनाद्विकल्पनं संख्यानम् । तथा मुकुरप्रतिबिम्बवदनतिरिक्तत्वेऽप्यतिरिक्ततयेवावभासितस्य भावस्य संविल्लक्षणस्वरूपारोहणम् । तथा विकल्पज्ञानादीनामपहस्तने शब्दनमात्ररूपत्वात् स्वात्मपरामर्श इति । कल क्षेपे, कल गतौ,

*१. मायां प्रज्ञामिति पाठभेदः ।

CC-0 Kashmir Research Institute. Digitized by eGangotri

कल संख्याने, कल शब्दे ज्ञाने प्राप्तौ च वर्तते इति धातुचतुष्टयस्यायं पञ्चधार्थः । तदुक्तं तन्त्रालोके—

क्षेपो ज्ञानं च संख्यानं गतिर्नादः क्रमादिदम्
स्वात्मनो भेदनं क्षेपो भेदितस्याविकल्पनम् ॥
ज्ञानं विकल्पः संख्यानमन्यतो व्यतिभेदनम् ।
गतिःस्वरूपारोहित्वं प्रतिबिम्बवदेव यत् ॥
नादः स्वात्मपरामर्शशेषता तद्विलोपनात् । (त. आ.-४ आ. श्लो. १७३–१७५)

इति । अथ च–कलैव कला शिल्पं यया मायाप्रकृत्याद्युपादानकारणवर्गमनपेक्ष्यैव स्वस्मिन् मुकुरनगरवत् प्रकाशैकात्म्येन स्वान्तरवस्थितस्य विश्ववैचित्र्यचित्रस्योन्मीलनं स्यादिति । तदुक्तम्—

निरुपादानसम्भारमभित्तावेव तन्वते ।
जगच्चित्रं नमस्तस्मै कलाश्लाघ्याय शूलिने ॥ (स्तव. चि. श्लो. ९)

इति । तथा च शक्तिसूत्रम्—

स्वेच्छया स्वभित्तौ विश्वमुन्मीलयति । इति (प्र. हृ. सू२ पृ. ५)

अन्यत्रापि–

लिखते जगत्त्रितयचित्रमद्भुतप्रतिभापरिस्फुरितशंसि ते नमः
सुसितैकसूक्ष्मनिजशक्तिवर्तिकारचितावभासशतशोभि शम्भवे ॥ इति ।

किञ्च–कलयति सृष्ट्यादीनि पञ्चकृत्यानि करोतीति कला–

*सृष्टिसंहारकर्तारं विलयस्थितिकारणम्† ।
अनुग्रहकरं देवं प्रणतार्तिविनाशनम् ॥

---

*प्रत्यभिज्ञाहृदये २२शे पृष्ठे प्रमाणत्वेनोद्धृतम् । †कारकमिति पाठान्तरम् ।

CC-0 Kashmir Research Institute. Digitized by eGangotri

इति । श्रीस्वच्छन्दशासनस्थित्या सदैव भगवती चितिः कृत्यपञ्चकं करोति, न केवलं शुद्धाशुद्धोभयाध्वस्फारणपरिपाट्या स्वात्मविकासमयं सृष्ट्यादिकं विधत्ते, यावत्सङ्कुचितदेहादिप्रमातृतायामपि । तदुक्तं श्रीप्रत्यभिज्ञायाम्–

तदेवं व्यवहारेऽपि प्रभुर्देहादिमाविशन् ।
भान्तमेवान्तरर्थौघमिच्छया भासयेद्बहिः ॥(१ अ. ६. आ. का. ७.)

इति । शक्तिसूत्रेऽपि—

"तथापि तद्वत् पञ्चकृत्यानि करोति" (प्र.हृ.सू.१०पृ.२२) अस्यार्थः- क्षेमराजपादैर्व्याख्यातो यथा–देहप्राणादिपदमाविशंश्चिद्रूपो महेश्वरो बहिर्मुखीभावावसरे नीलादिकमर्थं नियतदेशकालादितया यदाभासयति, तदा नियतदेशकालाद्याभासांशेसृष्टृता, अन्यदेशकालाद्याभासांशेऽस्य संहर्तृता, नीलाद्याभासांशे स्थापकता, भेदेनाभासांशे विलयकारिता प्रकाशैक्येन प्रकाशनेऽनुग्रहीतृता, इति । तथा—"तत्रैवाभासनरक्तिविमर्शन–बीजावस्थापनतद्विलापनतस्तानि" (प्र. हृ. सू११ पृ. २२) इति सूत्रान्तरे रहस्यप्रकारान्तरेणापि तानि व्याख्यातानि । यथा श्रीमहार्थदृष्ट्याद्दृगादिदेवीप्रसरणक्रमेण—

यद्यदाभाति तत्तत्सृज्यते ।

तत्र यदा प्रशान्तनिमेषं कञ्चित्कालं रज्यति तदा स्थितिदेव्या तत् स्थाप्यते, चमत्कारापरपर्यायविमर्शनसमये तु संह्रियते । यदा तु संह्रियमाणमप्येतदन्तर्विचित्रशङ्कादिसंस्कारमाधत्ते, तदा तत्पुनरुद्भविष्यत्संसारबीजभावमापन्नं विलयपदमध्यारोपितम् । यदा पुनस्तत्तथान्तः स्थापितमन्यद्वानुभूयमानमेव हठपाकक्रमेणालंग्रासयुक्त्या वा चिदग्निसाद्भावमापद्यते, तदा पूर्णतापादनेनानुगृह्यते एवेति । अथ च–"पुरुषे षोडशकले तामाहुरमृतां कलाम्"–इत्याद्युक्त्यान्तःकरणप्रभृतीनां षोडशानामपि कलानामाप्यायिकारित्वादनस्तमितत्वे-

CC-0 Kashmir Research Institute. Digitized by eGangotri

नामृताकारामाख्या सप्तदशी कला चिन्मात्रस्वरूपा सैव तत्तद्रूपावभासनेन प्रसृता नियततत्तत्प्रकाशरूपा । तदुक्तम्—

करणमरीचिचक्रमुदयं कुरुते रभसात् ।
स्थितिमुपयाति तत्र परसौख्यरसाक्ततया ।
विलयमुपैति चात्र परबोधभरक्षपणात्
परमकलात्रकेवलतया विलसत्यमला ॥

इति । श्रीतन्त्रालोकेऽपि—

उक्तश्च त्रिःशिरःशास्त्रे कलाव्याप्त्यन्तचर्चने ।
कला सप्तदशी तस्मादमृताकाररूपिणी ॥
परापरस्वस्वरूपबिन्दुगत्या विसर्पिता ।
प्राकाश्यं सर्ववस्तूनां विसर्गरहिता तु सा ॥ (त. आ. ३ आ. श्लो. १३७–१३८–१३९)

आद्यामनुत्तरत्वात् प्राच्यां निरतिशयपूर्णस्वातन्त्र्यचमत्कारमयीं प्रज्ञां परप्रतिभात्मिकामनुत्तराद्यनन्तशक्तिवृन्दोल्लेखशालिनीं वैश्वात्म्यावबिभासयिषां प्रत्यनन्योन्मुखप्रेक्षित्वशक्तिं परावाग्रूपामित्यर्थः ।

तदुक्तम्—

अनन्यापेक्षिता यास्य विश्वात्मत्वं प्रति प्रभोः ।
तां परां प्रतिभां देवीं संगिरन्ते ह्यनुत्तराम् ॥ (त. आ३ आ. श्लो. ६६)

इति । अथ च गोपितस्वभावस्य परमेशितुः किञ्चित्कर्तृत्वोपोद्बलनात्मिका शक्तिः कलेत्युच्यते याधः प्राणादिपरिमितप्रमातृतायामणून् क्षिपति । तदुक्तम्—

निरुद्धशक्तेर्या किञ्चित्कर्तृतोद्बलनात्मिका ।
नाथस्य शक्तिःसाधस्तात् पुंसः क्षेप्त्रीकलोच्यते ॥ इति ।

CC-0 Kashmir Research Institute. Digitized by eGangotri

यद्वा आद्यामित्यावृत्त्या कलाशब्देनान्वेयं तेनाद्या कला कामाकर्षिण्याख्या षोडशदले प्रथमा देवीति, यद्वा पञ्चदशसु नित्याकलास्वाद्या षोडशी कला चिदानन्दरूपा । तदुक्तं सुभगोदये—

दर्शाद्याः पूर्णिमान्ताश्च कलाः पञ्चदशैव तु ।
षोडशी तु कला ज्ञेया सच्चिदानन्दरूपिणी ॥

इति । यद्वा-प्रमातृ प्रमेयादेरशेषभावौघस्य प्रतिष्ठात्मा प्रज्ञा, उक्तञ्च "ब्रह्मगीतायाम्"— प्रतिष्ठा सर्ववस्तूनां प्रज्ञैषा पारमेश्वरी ।

इति । तथा समीयते सङ्गम्यते सदाशिवादितत्त्वजालमस्मिन्निति "एरच" (३-३-५६) समयः शिव इत्यर्थः । तत्राधरतत्त्वजालस्य बीजभावेनावस्थानात् । तदुक्तम्—

श्रीमत्सदाशिवोदारप्रारम्भं वसुधान्तकम् ।
.... .... .... .... .... .... .... .... ॥

इति । यद्वा समयमतं श्रीविद्योपासनायां मतत्रयस्योक्तत्वात् तन्मध्ये यच्छुक-वसिष्ठादिसंहितापञ्चकोक्तं वैदिकमार्गानुसारि तत्समयमतमभिधीयते । यच्चन्द्र-कुलाष्टकोक्तं तन्मिश्रमतं, कुलसमयोभयानुसारि यदेतदभिन्नतन्त्रोक्तं तत्कौल-मतमिति । यद्वा समं साम्यं यातीति समयः शिवः शिवशक्त्योः—साम्यस्य पाञ्चविध्येनोक्तत्वात् । अधिष्ठानसाम्यमनुष्ठानसाम्यमवस्थानसाम्यं नामसाम्यं रूपसाम्यं चेति । अधिष्ठानं पूजाधिकरणं श्रीचक्रादि, अनुष्ठानं पञ्चविधकृत्य-कारित्वम्, अवस्थानं नृत्यादिक्रिया, नामकामेश्वरादि रूपमारुण्यादि । एतत् सुभगोदय व्याख्यायां विस्तृतम् । किञ्च समं साम्यमर्थाच्छक्त्या सह याति समेतीति वा समयः शक्त्या सह शिवस्याविनाभावसम्बन्धवत्त्वात् । तदुक्तं—

CC-0 Kashmir Research Institute. Digitized by eGangotri

"शक्त्या विना शिवे सूक्ष्मे नाम धाम न विद्यते ।" इति ।
"न शिवः शक्तिरहितो न शक्तिः शिववर्जिता ।"

इति च । तन्त्रालोकेऽपि—

अकुलस्यादिदेवस्य कुलप्रथनशालिनी ।
कौलिकी सा पराशक्तिरवियुक्तो यया प्रभुः ॥ (३आ. श्लो.६७)

इति । समयो रहस्याचारो वा । तथा समेन साम्येन स्थितो ब्रह्मामृतरसो यस्यां सा "रसो वै सः, रसं ह्येवायं लब्ध्वानन्दीभवति" (तैति० २–७) इतिश्रुतेः ब्रह्माण्डपुराणेऽपि—

रस एव परं ब्रह्म रस एव परागतिः ।
रसो हि कान्तिदः पुंसां रसो रेत इति स्मृतः ॥
रसो वै रससंलब्ध्या ह्यानन्दी भगवत्यपि ।
वेदप्रामाण्यसंसिद्ध्या रसः प्राणतया स्थितः ॥
कोह्येवान्याच्च कः प्राण्यादित्यपि श्रुतिभाषितः ।
प्राणात्मको रसः प्रोक्तः प्राणदः कुम्भसम्भवः ॥

इति । किंच, समरसानुभूतिरहन्तेदन्ताभासराहित्यादेकरसा अनुत्तराकुलपरमशिवैकरस्यलक्षणा वेद्यविक्षोभविलयनिरर्गलोल्लासा स्वहृदयमात्रसंवेद्यानुभूतिर्निराभासपूर्णचमत्कारमयी । यद्वा समरसशब्देन सामानाधिकरण्यमुच्यते तेनाहन्तेदन्तयोः सममभिन्नरूपं रस्यमानमधिकरणमस्यास्तादृशी अनुभूतिः समधृततुलापुटन्यायेनाहमिदमिति परामर्शः शुद्धविद्यात्मा । तदुक्तम्—

सामानाधिकरण्यं च सद्विद्याहमिदं धियोः । इति । (ई० प्र० ३अ० १ आ० ३का०)

CC-0 Kashmir Research Institute. Digitized by eGangotri

श्रीमहेश्वरानन्दैरपि—

ज्ञाता स आत्मा ज्ञेयस्वभावश्च लोकव्यवहारः ।
एकरसां संसृष्टिं यत्र गतौ सा निस्तुषा विद्या ॥ (म. म. श्लो. १६)

इति यद्वा परमशिवरूपे सामरस्येन प्रस्फुरद्रूपा नत्वाधाराधेयभावेन तद्विविक्तस्यान्यस्याभावात् । तथा—गृणात्युपदिशति पारमार्थिकमर्थमिति गुरुः स्वात्मपरमार्थप्रकटनपरत्वाद् भोगमोक्षोभयसिद्धिप्राप्त्युपायः ।

गृणते तत्त्वमात्मीयमात्मीकृतजगत्त्रयम् ।
उपायोपेयरूपाय शिवाय गुरवे नमः ॥

इत्यभियुक्तोक्तेः । "आत्मा* द्रष्टव्यः श्रोतव्यः" (बृह० २–४–५) इत्यादौ तद्विज्ञानार्थं गुरुमेवाभिगच्छेदित्यदि श्रुतेः । अथ च गुरुः पारमेश्वरी परानुग्राहिका शक्तिः । तदुक्तं श्रीमदभिनवगुप्तपादैः—

तदत्र नीतौ संवित्तिरेवासौ गुरुरुच्यते ।
गिरत्येव यतो विश्वं सृष्टिसंहारयोगतः ॥ इति । (मा.वि. २–२६२)
गुकारस्त्वन्धकारः स्याद् रुकारस्तन्निरोधकः ।
अन्धकारनिरोधत्वाद् गुरुरित्यभिधीयते ॥

इति । शक्तिरहस्ये—

गुकारःसदिति प्रोक्तो रुकारो ज्ञानवाचकः ।
ब्रह्मज्ञानैकरूपत्वाद् गुरुरित्यभिधीयते ॥ इति ।

अन्यत्र, निरुक्त्या पूर्णानुत्तरस्वतन्त्रप्रकाशात्मज्ञानदायिनीगुरुमूर्तिः । तदुक्तम्—"तामिच्छाविग्रहां देवीं गुरुरूपांविभावयेत्" । इति । यद्वा शिवो-

---

१*'आत्मा वा' इति पाठ. ।

CC-0 Kashmir Research Institute. Digitized by eGangotri

ऽपि श्रीविद्योपासकः, उपासना च गुरुमन्तरेण न युज्यते, तस्यगुर्वपेक्षायां श्रीत्रिपुरसुन्दर्या एव गुरुत्वस्वीकारात् । अत एव योगिनीहृदये—

'अन्यायेन न दातव्यं नास्तिकानां महेश्वरि ! ।
एवं त्वयाहमाज्ञप्तो मदिच्छारूपया प्रभो' ! ॥ (२०३)

इति । एवं प्रवृत्ताविच्छैव कारणम् । तस्मात् परशिवस्य प्रवृत्तिकारणं भगवत्येवेति सिद्धं तस्या गुरुत्वम् । न च त्रिपुरसुन्दर्या गुरुमण्डलपूजायामादिनाथात् पूर्वं कथं न गणना स्यादितिवाच्यं, "शक्त्या विना शिवे सूक्ष्मे नाम धाम न विद्यते ।" इति चतुःशती शास्त्रोक्त्या इच्छाशक्तिविशिष्टस्यैव परमशिवस्यादिनाथगुरुत्वेनागमेषु गणनान्नोक्तचोद्यावकाश इत्यलमप्रस्तुतेन । श्रीविद्याक्रमोपदेशे वस्तुतः परा भट्टारिकैव प्रकाशानन्दसारोड्याणपीठस्थाचर्यानन्दनाथसंज्ञामुद्वहतः परमशिवाद्विद्याद्वयसन्तानक्रममवाप्तवती त्रेताद्वापरकलियुगदेशिकस्वरूपिणी भूत्वा शाम्भवतन्त्रमतिरहस्यं प्रावर्तयत् । अतो सैवगुरुस्वरूपाभिधीयते । तदुक्तं कामकलाविलासे—

आसीनःश्रीपीठे कृतयुगकाले गुरुःशिवोविद्याम् ।
तस्यै ददौ स्वशक्त्यै कामेश्वर्यै विमर्शरूपिण्यै ॥
सेयाय मित्रसंज्ञां स्थानेशा ज्येष्ठमध्यबालाख्या ।
चित्प्राणविषयभूता त्रेतायुगादिकारणत्रिगुरून् ॥
बीजत्रयाधिपतीन्* परीक्ष्य विद्यां प्रकाशयामास । (५१–५२–५३)

इति । तथा परम्परैव पारम्पर्यं, अर्थात् कुलविद्यावतारार्णदीक्षागुरूणां परम्परा दिव्यसिद्धमानवौघभेदात् त्रिविधा, स्वगुरूणाञ्च परम्परा तयाप्यनुग्राह्याणां योग्यतापादनात्तद्रूपेत्यर्थः । तदुक्तं बोधसारे—

*१. 'त्रितया ।'

CC-0 Kashmir Research Institute. Digitized by eGangotri

*तत्तद्विवेकवैराग्ययुक्तवेदान्तयुक्तिभिः ।
श्रीगुरुः प्रापयत्येव न पद्ममपि पद्मताम् ॥
प्रापय्य पद्मतामेनं प्रबोधयति तत्क्षणात् ।
तस्मात् सर्वप्रयत्नेन सेव्यः श्रीगुरुभास्करः ॥

इति । श्री पूर्वशास्त्रेऽपि–

तमाराध्य ततस्तुष्टाद्दीक्षामासाद्य शङ्कारीम् ।
ततूसम्बन्धात्ततः कश्चित्तत्क्षणादपवृज्यते ॥ इति ।

तल्लक्षणं यथा–

पदवाक्यप्रमाणज्ञः शिवभक्त्यैकतत्परः ।
समस्तशिवशास्त्रार्थबोद्धा कारुणिको गुरुः ॥ (त. आ. २३ आ. श्लो७-पृ.२६५)

तथा—

यः पुनः सर्वतत्त्वानि वेत्त्येतानियथार्थतः ।
स गुरुः मत्समः प्रोक्तो मन्त्रवीर्यप्रकाशकः ॥
स्पृष्टाः सम्भाषितास्तेन दृष्टाश्च प्रीतचेतसा ॥
नराः पापैः प्रमुच्यन्ते सप्तजन्मकृतैरपि ॥
ये पुर्नदीक्षितास्तेन प्राणिनः शिवचोदिताः ।
ते यथेष्टं फलं प्राप्य प्रयान्ति परमं पदम् । इति । (त. आ. १३ आ. श्लो. २१९–२२२. पृ. १३८–१३९)

अपि च भैरवतच्छाक्तिसदाशिवेशानन्तश्रीकण्ठभट्टारकाणां परम्परा तत आगतं पूर्णाद्वयप्रथासारं शैवज्ञानमित्यर्थः । यद्वा परम्पराया आगतः पारम्पर्यः

*बोधसारे त्वित्थं पाठ उपलभ्यते तत्तद्विवेकवैराग्ययुक्तवेदान्तयुक्तिभिः शिष्यं नयति गुर्वर्कः स्वैक्यं स्वाद्भिन्नमप्यहो विकासकोऽपि तपनो न पद्मं स्वैकतां नयेत तस्माद सर्वात्मभावेन सेव्या श्रीगुरुपादुका । (१३-१४) ।

CC-0 Kashmir Research Institute. Digitized by eGangotri

(अणन्तत्वे स्वार्थे ष्यञ्) तादृशो गुरुरिति गुरुविशेषणं कुलगुरुरित्यर्थः। परम्परायाः सम्प्रदायादागतं पारम्पर्यं चक्रमन्त्रपूजासङ्केतविषयिकं ज्ञानम्। तद्धि अन्यथा चुम्बनवृत्त्यादिना लब्धमनर्थायालं, सम्प्रदायप्राप्तस्य तु परमार्थप्राप्तिकरत्वात्। तदुक्तम्—

पारम्पर्यविहीना ये ज्ञानमात्रेण गर्विताः।
तेषां समयलोपेन विकुर्वन्ति मरीचयः॥

इति। विनयं तन्त्रप्रधानं शास्त्रं विरुद्धाचारत्वाद्वाममार्ग इत्यर्थः। अनुत्तरत्रिकाम्नायेषु तथैव व्याख्यातत्वात्। तदुक्तं श्रीतन्त्रालोके—

उक्तं श्रीरत्नमालायामेतच्च परमेशिना।
अशेषतन्त्रसारं तु वामदक्षिणमाश्रितम्॥
एकत्र मिलितं कौलं श्रीषडर्धकशासने।
सिद्धान्ते कर्मबहुलं मलमायादिदूषितम्॥
दक्षिणं रौद्रकर्माढ्यं वामं सिद्धिसमाकुलम्।
स्वल्पपुण्यं बहुक्लेशं स्वप्रतीतिविवर्जितम्॥
मोक्षविद्याविहीनं च विनयं त्यज दूरतः॥ (त. आ. ३७ आ. श्लो.-२५–२८ पृ. ४००–४०१)

इति। यद्वा विनयो नाम ब्राह्मणानां स्वाभाविकी सच्चिदानन्दरूपे स्वात्मनि स्थितिः। यदुक्तं गौडपादैः—

विप्राणां विनयो ह्येष शमः प्राकृत उच्यते।

इति। तथा उपदिश्यते पारम्पर्यक्रमेण संप्राप्यते इत्युपदेशः सम्प्रदायार्थः यदाहुः जयरथाचार्याः। तथाहि—भावार्थस्तावत् यत्र यादृग्विवक्षितमक्षरार्थमात्रं स एव च बाह्यत्वेऽपि आत्मज्ञानादिप्रतिपादनपरतया महाबोधरूपः शिव-

CC-0 Kashmir Research Institute. Digitized by eGangotri

वाक्याविसंवादितामाददानो गुर्वाद्यनवगीतः सम्प्रदायार्थ उच्यते "यथात्मा-ज्ञातव्यो मन्तव्य" इति "सकृद्विभातोऽयात्मेति" च। इदं च द्विविधमपि व्याख्यानं वर्णाद्यात्माणवोपायरूपं कथं नाम चात्र सकृद्विभातत्वादेव सातत्येनावभासमानशिवैकरूपस्यात्मनो ज्ञात्रेकरूपत्वाज्ज्ञातव्योऽयमित्यादिज्ञेयोचित इदन्तापरामर्शो भवितुमर्हतीति। स एव—

"स्वातन्त्र्यामुक्तमात्मानं स्वातन्त्र्याददृयात्पुनः।
प्रभुरीशादिसङ्कल्पैर्निर्माय व्यवहारयेत् ॥ (ई. प्र. १–५–१६

इत्यादिरीत्या प्रमात्रेकरूपतामपरित्यजन्नपि स्वात्मनि प्रमेयतामवभासयति येनैवं परामृश्यतामुद्बोढुमुत्सहत इति भाव्यतामवलम्बमानः 'शिवोऽय'मिति गुर्वादिभेदविभिन्नस्य शुद्धात्मनो गोचरतामियादित्यान्तरतया निगर्भशब्दव्यपदिष्टोऽयं तृतीयः प्रकारः। एवम्—

आत्मैव सर्वभावेषु स्फुरन्निर्वृ त्तचिद्वपुः*।
अनिरुद्धेच्छाप्रसरः प्रसरद्दृक्क्रियः शिवः ॥ (शि.द.आ.१,श्लो.२)

इति तथा—

"स्वात्मैव सर्वजन्तूनामेक एव महेश्वरः।
विश्वरूपोऽहमिदमित्यखण्डामर्शबृंहितः ॥"

इत्यादि, श्रीमत्पूर्वगुर्वादिष्टदृष्ट्यैवंविध आत्मा सर्वासु परिमितात्मसंवेदनरूपास्वपि दशासु पराहम्परामर्शमयपरप्रकाशात्मकसंवित्तिमात्ररूपतया परामृश्यानमः प्रयत्नंविनापि शिव एवं परं सहजमैश्वर्यमासादयेदित्ययं कुलमात्मस्वरूपं त्वित्यात्मरूपे कुले भवात् कौलिकशब्दव्यपदेश्यश्चतुर्थः इत्येतदपि प्रकारद्वयं विकल्पसंस्क्रियारूपतया शाक्तोपायात्मकम्। एवमप्यत्रैव यथायथं

---

*चिद्विभुः इति उपलब्धः पाठः।

CC-0 Kashmir Research Institute. Digitized by eGangotri

परप्रकर्षधाराधिरोहात्—

"ततः स्फुटतमोदारताद्रूप्यपरिबृंहिता ।
संविदभ्येतिविमलामविकल्पस्वरूपताम् ॥" (त.आ४. आ.श्लो.६)

इत्यादि दृशा सद्य एवात्मसाक्षात्कारलक्षणमविकल्पात्मकं प्रत्ययं यायादिति अज्ञजनासंवेद्यत्वाद्रहस्यशब्दाभिहितः शाम्भवोपायात्मा पञ्चमः । एवमियतोऽपि भावनाबलात्पराकाष्ठामधितिष्ठन् सत्यपि पिण्डे सदसदादिसकलकलनाकलङ्कोन्मुक्तसंविन्मात्रमयीं सिद्धिमासादयन् पुरः स्फुरद्रूपमपि भावमण्डलम् ।

'तेषामिदं समाभाति सर्वतो भावमण्डलम् ।
पुरःस्थमेव संवित्तिभैरवाग्निविलापितम् ॥' (त.आ.२ आ.श्लो.३५)

इत्याद्युक्तस्वरूपपरमात्ममयतामास्थितः सर्वत एवानन्यापेक्षमवभासत इति व्याख्यातायाः स्थितेरुपरिवर्तित्वादनन्यातिशायितया च महापरमतत्त्वार्थशब्दपरामृष्टः षष्ठः इति । यदागमः—

अक्षरार्थो हि भावार्थः केवलः परमेश्वरि ! ।
सम्प्रदायो महाबोधरूपो गुरुमुखस्थितः ॥
निगर्भोऽपि महादेवि ! शिवगुर्वात्मगोचरः ।
कौलिकः स्वात्मसंवित्तिरात्मसंवित्तिपूर्वकः ॥
रहस्यार्थो महागुप्तः सद्यः प्रत्ययकारकः ।
महापरमतत्त्वार्थः परमात्मवदास्थितः ॥
शिवगुर्वात्मसंवादरूपेणार्थावभासकः ।
निरस्तसर्वसङ्कल्पविकल्पस्थितिपूर्वकः ॥
विद्यापीठनिबद्धेषु संस्थितः पिण्डसिद्धिदः" ।

इति । एषां च प्रायशः सर्वत्रैवमसम्भवेऽपि ।

CC-0 Kashmir Research Institute. Digitized by eGangotri

'एक एव हि भावार्थो बाह्यशास्त्रेषु लभ्यते ।
शब्दालङ्कारसारोक्तिसंस्काररचनात्मकः ॥
भावार्थः सम्प्रदायश्च द्विकशास्त्रेषु विद्यते ।
शिव बाह्यार्थसंवादे महागुरुमुखस्थितः ॥
भावार्थः सम्प्रदायार्थो निगर्भार्थक्रमान्वितः ।
व्याख्यानं त्रिविधं देवि ! त्रिकशास्त्रेषु लभ्यते ॥
भावार्थः सम्प्रदायार्थो निगर्भार्थश्च कौलिकः ।
तथा सर्वरहस्यार्थस्तन्त्राणांपञ्चरूपिणाम्
भावार्थः सम्प्रदायार्थो निगर्भार्थश्च कौलिकः ॥
तथा सर्वरहस्यार्थो महातत्त्वार्थ एव च ॥
महाज्ञानार्णवे दृष्टं षट्कं तन्त्रेऽत्र पार्वति ! ।'

इत्यादिना प्राधान्यभिप्रायेण तत्र तत्र नैयत्येनावस्थानमुक्तमित्यलमनुन्मीलितमार्गोन्मीलनचापलेन । तदेवमेतद्यथासम्भवं तत्र तत्र स्वयमेवाभ्यूह्यम् । स चाद्याया मूलविद्यायाः परमशिवसामरस्येन स्थितायाः परास्वरूपादवरुह्य वाच्यवाचकभावाभासनपूर्वं बीजत्रयात्मवैखरीविद्यया परिणाममापन्नाया विश्वमयतावासनात्मा गुरुवक्त्रैकवेद्यः । एतत्सर्वम्—

सम्प्रदायो महाबोधरूपो गुरुमुखे स्थितः ।
विश्वाकारप्रथायास्तु महत्त्वं च तदाश्रयम् ॥

इत्यारभ्य, 'गुरुक्रमेण सम्प्राप्तः सम्प्रदायार्थ ईरितः ।
इत्यन्तं—महताग्रन्थेन योगिनी हृदयेविस्तृतं तत एवावधार्यम् ॥

यद्वा—उपदेशो निगर्भाख्यः शिवगुर्वात्मनामैक्यानुसन्धानात्मकः । तदुक्तं तत्रैव—

CC-0 Kashmir Research Institute. Digitized by eGangotri

निगर्भोऽपि महादेवि ! शिवगुर्वात्मगोचरः ।

इत्यादि । यद्वा उपदेशः कौलिकार्थः चक्रदेवतागुरुविद्यासाधकानामैक्यानु-सन्धानरूपः । तत्रैव—

कौलिकं कथयिष्यामि चक्रदेवतयोरपि ।
विद्यागुर्वात्मनामैक्यम्———॥ इत्यादि ।

यद्वा उपदेशः सर्वरहस्यार्थः स च परशिवस्वरूपिणी चिन्मयी कुण्ड-लिनी शक्तिः स्वात्मेति बुद्ध्या तत्समावेशात्मा । उक्तं तत्रैव—

मूलाधारे तडिद्रूपे वाग्भवाकारतां गते ।
अष्टात्रिंशत्कलायुक्तपञ्चाशद्वर्णविग्रहा ॥
विद्या कुण्डलिनीरूपा मण्डलत्रयभेदिनी ।
तडित्कोटिनिभप्रख्या बिसतन्तुनिभाकृतिः ॥
व्योमेन्दुमण्डलासक्ता सुधास्रोतःस्वरूपिणी ।
सदा व्याप्तं जगत्कृत्स्नं सदानन्दस्वरूपिणी ॥
एषा स्वात्मेति बुद्धिस्तु रहस्यार्थो महेश्वरि ! ॥ इति ।

अथ चोपदेशो महातत्त्वार्थः सच निष्कलप्रकाशानन्दसारपरतत्त्वे स्वात्मनि योजनात्मा । तदुक्तं तत्रैव—

महातत्त्वार्थ इति यत्तच्च देवि ! वदामि ते ।
निष्कले परमे सूक्ष्मे निर्लक्ष्ये भाववर्जिते ॥
व्योमातीते परे तत्त्वे प्रकाशानन्दविग्रहे ।
विश्वोत्तीर्णे विश्वमये तत्त्वे स्वात्मनियोजनम् ॥ इति ।

यद्वा भावार्थः, स च सौभाग्यविद्याया अवयवात्मपञ्चदशाक्षराणामर्थः तदुक्तम्—

CC-0 Kashmir Research Institute. Digitized by eGangotri

अक्षरार्थो हि भावार्थः केवलः परमेश्वरि ! ।

इत्यादि यद्वा तथा शिवश्चिदानन्दघनानुत्तरस्वतन्त्रप्रकाशस्वभावः, कथ्यते परामृश्यते यया सा शिवकथा पराविद्यास्वरूपा तच्च परभैरवस्य हृदयं तेन विना तस्य पाषाणादिजडप्रायत्वात् । तदुक्तं श्रीप्रत्यभिज्ञायाम्—

चितिःप्रत्यवमर्शात्मा परा वाक्स्वरसोदिता । (१अ.५आ.श्लो.१३)

इति । भर्तृहरिणापि—

वाग्रूपता चेदुत्क्रामेदवबोधस्य शाश्वती ।
न प्रकाशः प्रकाशेत साहि प्रत्यवमर्शिनी ॥ (वा. प. का. १–१२६)

इति । असावेव तज्ज्ञप्तावुपायः । यदुक्तं विज्ञानभैरवे—

यथालोकेन दीपस्य किरणैर्भास्करस्य वा ।
ज्ञायते दिग्विभागादि तद्वच्छक्त्या शिवः प्रिये ॥ इति । (२१श्लो०)

परानिरूपणं श्रीपरात्रीशिकायाम्—

चतुर्दशयुतं भद्रे ! तिथीशान्तसमन्वितम् ।
तृतीयं ब्रह्म सुश्रोणि ! हृदयं भैरवात्मनः ॥ (श्लो.९) इति ।

तन्त्रालोकेऽपि—

सारमेतत्समस्तस्य यच्चित्सारं जडं जगत् ।
तदधीनप्रतिष्ठत्वात् तत्सारं हृदयं महत् ॥
तथाहि सदिदं ब्रह्म मूलं मायाण्डसंज्ञितम् ।
इच्छाज्ञानक्रियारोहं विना नैव सदुच्यते ॥
तच्छक्तित्रितयारोहाद् भैरवीये चिदात्मनि ।
विसृज्यते हि तत्तस्माद्बहिर्वाथ विसृज्यते ॥ (त. आ. ४आ. १८५-१८८ पृ. २१५–२१७)

इति । अथच—

CC-0 Kashmir Research Institute. Digitized by eGangotri

"अकारः सर्ववर्णाग्र्यः प्रकाशः परमः शिवः"

इत्युक्तस्थित्या शिवशब्देनाकारो ग्राह्यस्तेनाकारककारथकारादिवर्णपुञ्जात्मकं कुलपीठमित्युच्यते, तदात्मिकामित्याहुः । तदुक्तम्—"अकथादित्रिपञ्चात्मेति" तथा प्रमीयतेऽनेन विश्वो व्यवहार इतिप्रमाणं यथार्थानुभवरूपं तच्च आदिसिद्धपरप्रमातृसंविन्मयं तस्य प्रत्यक्षादिप्रमाणजीवितरूपत्वात् तथाच प्रमातृसंविदेव सर्वव्यवहारनिबन्धनं तन्नैरपेक्ष्येण नीलादीनां तावत्स्वरूपे परस्परं विशेषाभावान्नीलं पीतं पीतमपि नीलमिति विरोधापत्तिः स्यात्, स्वलक्षणत्वनियामकाभावान्नीलमिदं किमस्त्यनीलं वेति संशयस्तस्याप्यसम्भवो वेति सर्वथा विश्वव्यवहारस्य तूष्णीम्भाव एव स्यात् । यदि नीलादीनां प्रमातृप्रकाशोपश्लेषं विनैव नीलादिरूपतैव प्रकाशमानत्वं, तत् सर्वदा ते सर्वान् प्रति तथा प्रकाशेरनिति सर्वे सर्वज्ञाःस्युः; अतथाप्रकाशने तु अज्ञा वा स्युः । तस्मादात्मप्रकाशस्य तत्तन्नियतस्वलक्षणप्रतिष्ठानिबन्धनत्वाज्ज्ञातृज्ञेयज्ञानादीनां साधने बाधने वा मुख्यं प्रयोजकत्वम् । तदुक्तं प्रत्यभिज्ञायाम्—

प्रागिवार्थोऽप्रकाशःस्यात् प्रकाशात्मतया विना ।
नच प्रकाशो भिन्नःस्यादात्मार्थस्य प्रकाशता ॥ (१अ. ५आ. श्लो.२)

इति । सच प्रकाशस्तत्तद्देशकालावच्छिन्ननीलादिवस्तूपरागेण नियतरूपतामादधानः प्रमाणशब्दव्यपदेश्यो भवेत्तस्य स्वपरप्रकाशकत्वात्स्वसिद्धिं प्रति प्रमाणान्तरापेक्षाया असम्भवात् प्रत्यक्षादीनां प्रमाणानामपि तदधीनैव सिद्धिः स्वतस्तु स्वसंवेदनव्यतिरिक्तप्रमाणाप्रमेयत्वात् तदुक्तं श्रीकामिकायां—

तस्य देवातिदेवस्य परापेक्षा न विद्यते ।
परस्य तदपेक्षत्वात् स्वतन्त्रोऽयमतःस्थितः ।

इति । श्रीतन्त्रालोकेऽपि—

CC-0 Kashmir Research Institute. Digitized by eGangotri

प्रमाणान्यपि वस्तूनां जीवितं यानि तन्वते ।
तेषामपि परो जीवः स एव परमेश्वरः ॥ (आ.१ श्लो.५५ पृ.९३)

इति । महेश्वरानन्देनापि—

आत्मा खलु विश्वमूलं तत्र प्रमाणं न कोऽप्यर्थयते ।
कस्य वा भवति पिपासा गङ्गास्रोतसि निमग्नस्य ॥ (म. म. ३)

इति । प्रत्यभिज्ञायामपि—

*प्रमातरि पुराणे तु सर्वदाभातविग्रहे ।
किं प्रमाणं नवाभासः सर्वप्रमितिभागिनि ॥ (२–३–१६)

इति । श्रुतिरपि—'विज्ञातारं अरे केन विजानीयादिति' । (बृ.उ.२-४-१४)

तथा—

स्वपदा स्वशिरश्छायां यद्वल्लङ्घितुमीहते ।
पादोद्देशे शिरो न स्यात्तथेयं बैन्दवी कला ॥ इति ।

तस्मात्स्वसंविदेवादिसिद्धत्वात् सर्वत्र स्फुरन्ती प्रमाणं परमित्यर्थः ॥
तथा परमं सर्वदर्शनोक्तमोक्षाभासेभ्य उत्कृष्टं निर्वाणं मोक्षः स्वशक्तिविकासात्मकः तदुक्तं परमार्थसारे—

मोक्षस्य नैव किञ्चिद्धामास्ति नचापि गमनमन्यत्र ।
अज्ञानग्रन्थिभिदा स्वशक्त्यभिव्यक्तता मोक्षः ॥ (श्लो.६०) इति ।

श्रीतन्त्रालोकेऽपि—

मोक्षो हि नाम नैवान्यः स्वरूपप्रथनं हि सः ।

'स्वरूपं चात्मनः संविदिति' । दर्शनान्तरोक्ता हि मोक्षा अनुत्तरमोक्षा-

*त्रिकहृदयान्तर्गतमिदं पद्यम् ।

CC-0 Kashmir Research Institute. Digitized by eGangotri

पेक्षया हेयपक्ष एवावस्थिताः । तन्निर्णयमाह जयरथाचार्यः—

*यः खलु वैष्णवादिमते मोक्षः सोऽप्यस्मद्दर्शने प्रलयाकलतामयः इति। तत्र वैष्णवानां परप्रकृतिसायुज्यं मोक्षः, तन्मते हि भगवद्वासुदेवाभिधानस्य महाविभूतेश्चेतनाचेतनविधातृत्वात् परप्रकृतिरूपस्य स्वस्वभावात् क्रमविचित्रतया तथा तथा भावनाद्विश्वरूपतयानेकात्मनोऽपि "एकमेवाद्वितीयं ब्रह्म नेह नानास्ति किञ्चन" (कठो० ४-११) इत्यादिश्रुतेस्तत्त्वज्ञानाभ्यासात्परिशुद्धसंविद्रूपैकत्वाव्यभिचारात् अनेकस्यापरमार्थिकत्वादुपशान्तविकारग्रन्थेरैक्यात्मावगमो मोक्षः । यच्छ्रुतिः—"पादोऽस्य विश्वाभूतानि त्रिपादस्यामृतं दिवीति" ततः सर्गो बुद्बुदत्वेनाभिव्यज्यते इति च । ब्रह्मवादिनामानन्दरूपता मोक्षः । तन्मते हि संसारदशायामविद्यावरणवशेनानुभूयमानस्यात्मनः "आत्मा वा अरे ज्ञातव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" (बृह.२-४-५) इत्यादि श्रुतेस्तत्त्वज्ञानाभ्यासादविद्यावरणापगमे निरवधिकनिरतिशयस्वप्रकाशनैसर्गिकानन्दतया संवेदनं मोक्षः। यच्छ्रुतिः—"विज्ञानमानन्दं ब्रह्मेति" विज्ञानवादिनां शुद्धचित्तमात्रं मोक्षः। तन्मते हि स्वभावतः प्रभास्वरस्वरूपस्य चित्तसन्तानस्यानाद्यविद्याबलाद्रागादिभिरागन्तुकमलैरावृतत्वेऽपि नैरात्म्यादिभावनाभ्यासात् तत्तदागन्तुकमलप्रहाणेनाश्रयपरावृत्तिबलादविनश्वरज्योतीरूपस्वस्वरूपसाक्षात्कारो मोक्षः । यदाहुः—

प्रभास्वरमिदं चित्तं प्रकृत्यागन्तवो मलाः ।
तेषामपायेसर्वार्थं तज्ज्योतिरविनश्वरम् ॥

इति । वैभाषिकाणां दीपवत् सन्ततिक्षयो मोक्षः । तन्मते हि क्लेशकर्मादिहेतुसमुत्थं तत्फलरूपं रूपादिस्कन्धपञ्चकमिति तदुभयात्मायं संसारः ।

---

*तन्त्रालोकस्य ४र्थाह्निके त्रिंशत्तमश्लोकस्य व्याख्यायामुल्लिखितोऽयं सन्दर्भः ।

CC-0 Kashmir Research Institute. Digitized by eGangotri

यदुक्तम्—हेतुफले संसार इति, मोक्षः पुनर्दीपस्य यथा स्नेहादिकारणक्षयात् पुनरुत्पादायोगान्निरोधः, तथैव नैरात्म्यादिभावनाभ्यासात् क्लेशकर्मादिप्रहाणेन रूपादीनां पञ्चानामपि स्कन्धानामिति। यदाहुः—

दीपो यथा निर्वृत्तिमभ्युपेतो
नैवावनिं गच्छति नान्तरिक्षम्।
देशं न कञ्चिद्विदिशं न काञ्चित्
स्नेहक्षयात् केवलमेव शान्तिम्॥

'योगी तथा निर्वृतिमभ्युपेत' इत्यादि। अत्राद्ये पक्षद्वये ब्रह्मणः आनन्दमयत्वात् स्वात्मपरामर्शकतया सवेद्यप्रलयाकलप्रायत्वम्। इतरत्र पुनरेकस्य नित्यस्य कस्यचिद्वेदकस्यानभ्युपगमादपवेद्यप्रलयाकलप्रायत्वम्। अक्षपादमतादावप्यात्मनः सर्वगुणोच्छेदात्मन्यपवर्गेऽप्यपवेद्यप्रलयाकलप्रायत्वमेवावसेयम्। प्रलयाकलानाञ्च मलद्वयावशेषात् संसारकारणस्याप्रक्षयात् संसारित्वमित्येवंप्रायो मोक्षो हेयपक्षे एवेति। उक्ता इमे दर्शनान्तरीया मोक्षा मोक्षाभासा यतस्ते मायोर्ध्वतत्त्वसृष्टिं प्राप्य मन्त्रादिभावं यान्ति, अन्यथा तत्तत्वसृष्टौ पुनस्तेषां संसारित्वमेव। यदाहुरभिनवगुप्तपादाः—

तं प्राप्यापि चिरं कालं तद्भोगाभोगभुक्ततः।
तत्तत्त्वप्रलयान्ते तु तदूर्ध्वां सृष्टिमागतः॥
मन्त्रत्वमेति सम्बोधादनन्तेशेन कल्पितात्'। (त. ४. ३१–३२)

इति। तथा—

एतत्कार्ममलं प्रोक्तं येन साकं लयाकलाः।
स्युर्गुहागहनान्तस्थाः सुप्ता इव सरीसृपाः॥
ततः प्रबुद्धसंस्कारास्ते यथोचितभागिनः।

CC-0 Kashmir Research Institute. Digitized by eGangotri

ब्रह्मादिस्थावरान्तेऽस्मिन् संसरन्ति पुनः पुनः ॥
ये पुनः कर्मसंस्कारहान्यै प्रारब्धभावनाः ।
भावनापरिनिष्पत्तिमप्राप्य प्रलयं गताः ॥
महान्तं च तथान्तःस्थभावनापाकसौष्ठवात् ।
मन्त्रत्वं प्रतिपद्यन्ते चित्रं चित्राच्च कर्मतः ॥ (तं. ९–१३८–१४१-पृ. १०९–११०)

इति । तथा—

सांख्यवेदादिसंसिद्धाञ्छ्रीकण्ठस्तदहर्मुखे ।
सृजत्येव पुनस्तेन न सम्यङ् मुक्तिरीदृशी ॥ (तं. ६–१५२)

इति । तथा परगुहा परस्य कामेश्वरस्य गुहा विविक्तरत्यास्पदत्वादन्तः-पुरात्मिका, तदुक्तमाचार्यपादैः—"पुरारातेरन्तः पुरमसीत्यादि" यद्वा परगुहा-तिक्रान्तभेदमयप्रसरत्वाच्छुद्धत्वाच्च महामायारूपा शिवादितत्त्वप्रसरकारणमति-क्रान्तभेदमयसिद्ध्यष्टकत्वादभेदात्मकसंविन्मयैश्वर्यशालिनी अतिभूतिरेवंरूपा परगुहा । तत्राणिमादयो भूतयोऽभेदमय्यो यथा—प्रकाशरूपत्वेन सकलपदार्थान्तर्भावसामर्थ्यमणिमा, तथैवाशेषवस्तुव्यापकत्वं महिमा, भेदप्रथात्मगौरव्युदासो लघिमा, स्वतन्त्रचिन्मयपूर्णाहंभावविश्रान्तिलाभः प्राप्तिः, वैश्वात्म्यविलासविस्फुरणं प्राकाम्यम् ,अनवच्छिन्नैश्वर्यशालित्वमीशित्वं, विम्रष्टृत्वेन सर्वसहिष्णुता वशित्वम् , पूर्णाहन्ताभावना यत्र कामावसायित्वमिति । भेदमयीनां भूतीनां तु निरूपणं प्राक् प्रपञ्चितम् ।

*तथा विधिस्तत्तत्सिद्धिसाधनस्वभावत्वे सत्यप्रवृत्तप्रवर्तनात्मवाक्यं—"दार्शपौर्णमासाभ्यां यजेत स्वर्गकाम" इत्याद्यात्मकम् । न पुनरज्ञातज्ञापकम् । यदाहुः—

---

*तन्त्रालोकस्य प्रथमाह्निके १२७ तम् श्लोकस्य व्याख्यायामेतन्निर्दिष्टम् ।

CC-0 Kashmir Research Institute. Digitized by eGangotri

विधेर्लक्षणमेतावदप्रवृत्तप्रवर्तनम् ।
अतिप्रसङ्गदोषेण नाज्ञातज्ञापनं विधिः ॥

इति । सच विधिः स्वर्गयागयोः साध्यसाधनभावमवगमयन् तत्र पुमांसं प्रवर्तयति । एतावदेवास्य प्रवर्तकत्वं यत्सप्रत्ययस्य पुंसः प्रवृत्तोऽहमितिज्ञानोत्पादनम् । असौ विधिर्नियोगभावनाद्यात्मतया बहुविधः । तत्र नियोग इतिप्राभाकराः, भावनेति भाट्टाः, चोदनेत्यन्ये वदन्ति । लिङादिप्रत्ययवाच्यः प्रवर्तितोऽहमिति प्रेरणात्मकः कार्यानुष्ठेयो धर्मो नियोगः सच द्व्यनुबन्धवान् याज्यादिना विषयानुबन्धः, स्वर्गकाम इत्यनेनाधिकारानुबन्धः । कस्यचित् क्वचिन्नियोजनाद्धि नियोगस्वरूपमस्येति । भाव्यनिष्ठो भावकव्यापारो भावना भाव्यं स्वर्गादिफलं तन्निष्ठस्तदुत्पादकपुरुषव्यापारो भावना, भवन्तं हि स्वर्गादिकमर्थं स्वव्यापारेण पुमान् भावयतीति भावनोच्यते । साच द्विधा, शब्दभावनार्थभावनाचेति, साच त्र्यंशा किं केन कथं भावयेदित्यंशत्रयापेक्षित्वात् । तदुक्तम्—

सा धातोः प्रत्ययाद्वापि भावनावगतासती ।
अपेक्षतेंऽशत्रितयं किं केन कथमित्यदः ॥ इति ।

तत्रार्थभावनायां किमित्यपेक्षायां स्वर्गः केनेत्यपेक्षायां यागः, कथमित्यपेक्षायां व्रीह्यादि सम्बन्धनीयम्, एवं शब्दभावनायामपि किमित्यपेक्षायां भाव्या पुरुषप्रवृत्तिः, केनेत्यपेक्षयां शब्दः, कथमित्यपेक्षायामर्थवादवाक्यव्यापारः सम्बन्धनीयः । वैदिकं विधायकं वाक्यं चोदना । यदाहुः—चोदनेति क्रियायाः प्रवर्तकं वचनमिति । एवं विद्या श्रुतिरूपेत्यर्थः । अथ च विद्या पञ्चदशाक्षर्यात्मा सौभाग्यविद्या त्र्यक्षर्यात्मा वा साचाग्रे समुद्धरिष्यते इति ॥१७॥

योगिनोऽपि किलाधोऽधस्पदोल्लङ्घनक्रमेणैव सर्वोर्ध्वचिदानन्दस्वात्मरसलाभे एवमुक्ति इति निर्दिशन् आगमानुभवादिसिद्धं तत्क्रममाह—

CC-0 Kashmir Research Institute. Digitized by eGangotri

प्रलीने शब्दौघे तदनु विरतेबिन्दुविभवे
ततस्तत्त्वे चाष्टध्वनिव*पुरुपाधिन्युपरते।
श्रिते शाक्ते पर्वण्यनुकलितचिन्मात्रगहनां
स्वसंवित्तिं योगी रसयति शिवाख्यां परतनुम्॥१८॥

अन्वहमभ्यस्यतो योगिनः परावागात्मारावो विमर्शशक्तिनादरूपतया प्रथमं हृदयादिस्थानेष्वाविर्भवति, तस्य नादस्य पश्यन्तीमध्यमावैखर्यात्मत्वेन त्रैविध्यं, प्रत्येकं च स्थूलसूक्ष्मपरत्वेन त्रैविध्ये नवधात्वं, तेषामाधारभूतो दशमः परावागात्मा स एव हि स्वस्वातन्त्र्यात् स्वात्मनि तथा विभागमवभासयेत्। तदुक्तम्—

†नदते दशधा सा तु दिव्यानन्दप्रदायिका।
चिनी तु प्रथमः शब्दश्चिञ्चिनी तु द्वितीयकः॥
चिरवाकी तृतीयस्तु शंखशब्दश्चतुर्थकः।
तन्त्रीघोषः पञ्चमस्तु षष्ठो वंशरवस्तथा॥
सप्तमः कांस्यतालस्तु मेघ‡शब्दोऽष्टमस्तथा।
नवमो दाघ¶निर्घोषो दशमो दुन्दुभिस्वनः॥
नव शब्दान् परित्यज्ज दशमो मोक्षदायकः।
अनेन विधिना येन व्याहरेद् दशधा रवम्॥ इति।

एवमकारादि प्रणवकलासमुद्भूते दशधा शब्दौघे पूर्वपूर्वत्यागादुत्तरोत्तरा-क्रमणेन वशीकृत्य प्रलीने लयङ्गते, अथच प्रत्यहं योगाभ्यासं युञ्जानस्य यो-

---

*ध्वनिभिरनुपाधिन्युपरते इति पाठान्तरम्। †तन्त्रालोके ५माह्निके शततमश्लोक व्याख्यायां निर्दिष्टाः जयरथेन श्लोका इमे। ‡मेघशब्दरवस्तथा इति मु. पु. पाठः। ¶दाव इति मु. पु. पाठः।

CC-0 Kashmir Research Institute. Digitized by eGangotri

गिनः काकी चञ्च्वग्राकृष्टसमीरणैरुदरदरीपूरणात् सुषुम्णाभ्यन्तरे प्राणवायुः सञ्चरति । तदा सहजोऽनाहतभट्टारकः समुद्गच्छति, स नादो वीणादिकलरवसमः परपदप्राप्तिप्रत्यूहतयानन्दजनको भवति । अतस्तस्मिन् शब्दौघे हेयत्वात्प्रलीने ऊर्ध्वोर्ध्वपदारोहणेन लयं गते सति, तदुक्तं त्रिपुरासारे—

यथा शक्त्याभ्यासं प्रतिदिवसमेवं विदधतः
सुषुम्णान्तश्चायं प्रचरति शनैर्देहपवनः ।
तदा नादो नैजो भवति सहसानन्दजननः
क्रमाद्वीणावाद्यप्रहतमृदुवीणारवसमः* ॥

आदौ मत्तालिमालागलपथविगलत्तारझङ्कारहारी-
नादोऽसौ वंशकांस्यानिलभरितलसद्वंशनिस्वानतुल्यः ।
घण्टानादानुकारी तदनु जलनिधिध्वानधीरो गभीरो-
†गर्जन् पर्यन्तघोषः पर इह कुहरे वर्तते ब्रह्मनाड्याः॥

विजिती‡भवतीह तेन वायुः सहजो यस्य समुत्थितप्रणादः ।
अणिमादिगुणा भवन्ति तस्यामितपुण्यस्य महासुखास्पदस्य ॥
(३प. श्लो. ४९–५१)

इति । तदनु वेत्तीति बिन्दुर्वेदयिता भ्रूबिन्दुनामा तात्स्थ्यात्परप्रमाता तस्य मान्त्रकलात्मकस्य बिन्दोर्विभवो ज्ञातृज्ञानज्ञेयाद्यात्मना परिस्फुरणम् । तदुक्तम्—

चित्स्वाभाव्यादसौ देवः स्वात्मना विमृशन् प्रभुः ।
अनाश्रितादिभूम्यन्ता भूमिकाः प्रतिपद्यते ॥

इति । तस्मिन् विरते विगलिते सति, एतेनार्धचन्द्रनिरोधिकयोरपि वैभवं ज्ञेयम् । ततस्तद्बिन्द्वादिवैभवं परित्यज्य

---

*शयः इति मु. पाठः । †गर्जं इति मु. पु. पाठः । ‡ते इति मु. पु. पाठः ।

CC-0 Kashmir Research Institute. Digitized by eGangotri

घोषो नादःस्वनःशब्दःस्फोटाख्यो ध्वनिरेव च ।
झाङ्कारो धुङ्कृतिश्चैव अष्टधानाहतः स्मृतः ॥ (स्व. ११प. श्लो. ६)

इति । स्वच्छन्दतन्त्रोक्तैर्घोषाद्यष्टध्वनिरूपा उपाधयो यस्य । अथ च अष्टध्वनिवपुषः शून्यादिस्वरूपाणि उपाधयोऽवच्छेदका यस्य तस्मिंस्तत्त्वेऽनाहताख्ये नादे मान्त्रकलात्मकेऽपि विलीने सति, तदुक्तं कुलामृते—

अष्टधानाहतः प्रोक्तः शून्यादिप्रतिभेदतः ।
शून्यं स्पर्शस्तथा नादो ध्वनिर्बिन्दुस्तथैव च ॥
शक्ति जीवाक्षरं चेति अष्टधानाहतः स्मृतः ।

इति । यद्वा वाचकस्वरूपविमर्शयुक्त्या अकचाद्यष्टवर्गोपाधियुक्ते नादे तदूर्ध्वं शाक्ते पर्वणि शक्तिशब्देन व्यापिन्यादिकं गृह्यते, तेन शक्तिव्यापिनीसमनारूपे ग्रन्थौ ललाटोर्ध्वमुपर्युपरि संस्थिते श्रितेऽधिष्ठिते सति अन्वनन्तरं योगी स्वसंवित्तिं महात्रिपुरसुन्दरीं विलीनपदैकादशकात्मावरणां स्वात्मसंविन्मयीमुन्मनाख्यमान्त्रकलारूपां स्थूलसूक्ष्मशरीरद्वयनिमज्जनादुन्मग्नां परतनुं पूर्णाहम्भावविमर्शरूपां रसयति चमत्कुरुते "रसो वै सः, रसमेव लब्ध्वानन्दी भवति" इति श्रुतेः । अथ च अनुर्लक्षणे इत्युक्तेः स्वसंवित्तिं स्वात्मसंविदमनुलक्षणीकृत्य तत्रैव लक्ष्यभूतां परतनुं योगी रसयतीत्यन्वयः ।

तदुक्तं श्रीनेत्रतन्त्रे—

भिन्द्याद् भिन्द्यात्परं स्थानं यावत्सुरवरार्चिते ! ।
तत्स्थानं चैव सम्प्राप्य योगी समरसो भवेत् ॥
निष्कलंभावमापन्नो व्यापकः परमः शिवः । (७अधि. श्लो० ३४-३५)

इति । कीदृशीं कलितमव्यक्तामर्शयुतं चिन्मात्रं तेन गहनां व्याप्तामिति । तथा शिवस्य पूर्णस्वातन्त्र्यैश्वर्यनिर्भरानुत्तरसंवित्प्रकाशस्याख्या स्वाभेदेन प्रथनं

CC-0 Kashmir Research Institute. Digitized by eGangotri

यस्यां, तदुक्तं स्वच्छन्दसङ्ग्रहे—

या चोक्ता* समनाशक्तिस्तदूर्ध्वे उन्मना स्मृता ।
नात्र कालकला†भानं न तत्त्वं न च देवता ॥
स्वनिर्वाणं परं शुद्धं रुद्रवक्त्रं‡ तदुच्यते ।
शिवशक्तिरिति ख्याता निर्विकल्पा निरञ्जना ॥
तत्त्वातीतं वरारोहे ! वाङ्मनोऽतीतगोचरम् ।
सुनिष्कलं च सकलं नीरूपं निर्विकल्पकम् ।
निर्द्वन्द्वं परमं तत्त्वं शिवाख्यं परमं पदम् ।

इति । तथा कलिताः स्वान्तःक्रोडीकृतमान्त्रकलैकादशिका चासौ चिच्चैतन्यशक्तिस्तया मात्रेण सामस्त्येन गहनां सुनिर्भरामनवच्छिन्नपरचिन्मयीमित्यर्थः । मात्रं कात्स्न्यावधारणे इत्युक्तेः, अनुकलितेन स्वात्मसाक्षात्कारानुभूतेन चिन्मात्रेण चिच्छक्त्यैव गहनां निरन्तरां वेद्यान्तराभावादिति वा

इदानीं प्राक् सूचितायाः परमविद्यायाः समुच्चारक्रममनुग्राह्यजनसंमुखीकरणाय समुपक्षिपति 'प्रलीने' इति ।

इह खलु "नास्योच्चारयिता कश्चित् प्रतिहन्ता न विद्यते ।
स्वयमुच्चरते हंसः प्राणिनामुरसि स्थितः ॥ (स्व. ७. प. श्लो. ५९)

इत्युक्तरीत्यानच्ककलारूपनिष्कलशिवभट्टारकाधिष्ठितो हानसमादानधर्मकत्वात् प्राणात्मा हंसोऽन्तर्बहिर्गमागमाभ्यां सर्गसंहारौ करोति, यतः पारमेशी बोधाख्या शक्तिरखिलं विश्वं क्रोडीकृत्य परा कुण्डलिका सती विमर्शरूपत्वेन नादात्मवर्णकुण्डलिकात्मतया स्फुरित्वान्तर्निमज्जितैत्स्वरूपा प्राणकुण्डलिकारूपतयाभातीत्याम्नायः । तत्पदपरिशीलनाभ्यासेनैव द्वादशान्तपदारोहणात् योगो मध्यमोर्ध्वमार्गारोहणात्मोपायः प्रशस्तो विद्यते यस्य स योगी स्वसंवित्तिं

---

स्व.तन्त्रे १०मे पटले १२७६-७७ तमे श्लोकेऽत्रेत्थं पाठान्तराणि *यावत्सा । †कालःकलाश्चारः । ‡गुरुवक्त्रं पृ. ५५५-५६ ।

CC-0 Kashmir Research Institute. Digitized by eGangotri

निजां महाप्रकाशस्वभावां संविदमुन्मनापरतत्त्वरूपां परतनुमशेषविश्वनिर्भरत्वात् पूर्णाहम्मयीं रसयति समाविश्य स्वाभेदेन चमत्कुरुते । कीदृशमित्याह—'अनुकलितेति' अनुकलितं पूर्णानुसन्धानेनाविनाभूतं यच्चिन्मात्रं शुद्धवेदितृरूपं तेन गहनां सर्वतोनिर्भरां समानावधिकविश्वावच्छेदप्रशमसंस्कारस्यापि विगलनात् । तथा शिवो विश्वोत्तीर्णविश्वमयस्वच्छस्वतन्त्रचिदानन्दघनः परमशिवः, नतु सिद्धान्तिपाशुपतलाकुलादिभिः स्वातन्त्र्यवैधुर्येण व्यापकत्वनित्यत्वामूर्तत्वादिधर्मसाम्येन कल्पितो भिन्नशिवात्मा आख्यायते आत्मीयतया प्रत्यभिज्ञायते यया तां शिवाख्याम् । एवमुन्मनाख्यायां विद्यायामुन्मीलितायां सत्यां परमशिवैकात्म्यमासादयेत् न तद्व्यतिरेकेण परमनुत्तरधामप्राप्तिरित्याशयः । तदुक्तं श्रीस्वच्छन्दतन्त्रे—

तत्रस्थो व्यञ्जयेत् तेजः परं परमकारणम् ।
परस्मिंस्तेजसि व्यक्ते तत्रस्थः शिवतां व्रजेत् ॥ इति । (१. ४–३९७)

तच्च कथङ्कारं स्यादित्याशङ्क्य मान्त्रीयवाचककलासोपानारोहतद्विश्रान्त्यनुभवपरिपाटीपुरस्सरं तद्धेयतां च पारमार्थ्येनावेदयन् आरोहणक्रममाह–'प्रलीनेति' शब्दस्याकारोकारमकारमात्रासमुदायात्मस्पष्टवर्णोच्चाररूपस्यौघे चिञ्चिण्यादिध्वनिसमुद्भवहेतौ प्रवाहे प्रलीने प्रकर्षेणोत्तरोत्तरपदविश्रान्त्या लयं याते सति हृत्कण्ठतालुषु तद्वाच्यब्रह्मादिकारणपदोल्लङ्घनात् । तदुक्तं श्रीस्वच्छन्दे —

अकारेण यदा युक्त उकारचरणेन तु ।
मकारमात्रयायुक्तो वर्णोच्चारो भवेत् स्फुटः ॥ इति । (४१. २५८)

तथा—

अकारश्च उकारश्च मकारश्च तृतीयकः ।
वर्णत्रयमिदं प्रोक्तं ब्रह्माद्यादेवतास्त्रयः ॥ इति । (६१.२३)

CC-0 Kashmir Research Institute. Digitized by eGangotri

एतदुक्तं भवति–घटमानस्य योगिनो दिव्यकरणबन्धपुरस्सरमूर्ध्वरेचकेन ग्रन्थि-भेदनं कुर्वतो हृदयादिपदेषु प्राणशक्तेर्ऋजुतया प्रसरणात् तत्तच्छब्दानुभवोकारादिकलाजन्यो व्यक्तं श्रूयमाणः पूर्वपूर्व उत्तरोत्तरपदारोहे शाम्यति। तदुक्तं श्रीस्वच्छन्दे—

ततो वै ज्ञानशूलेन ग्रन्थीन् भिन्दन्समुच्चरेत्।
भित्वा हृदयग्रन्थिं तु ततः शब्दः प्रजायते॥
यदाकाशसमायोगाद् घोषशब्दोपमो भवेत्। (४प. ३६९–३७०)

तल्लक्षणमन्यत्र—
श्रवणाङ्गुलिसंयोगाद्यः शब्दः सम्प्रवर्तते।
दीप्तवह्निस्वनाभोगः स नादो घोष उच्यते* ॥ इति।

धकधकाकृतिः श्रुतिरित्यर्थः।
तथा,—कण्ठस्थो विरमेच्छब्दः कण्ठं प्राप्य वरानने!।

भिन्दतः कण्ठदेशं तु शब्दो धुगधुगायते॥
तालुमध्यगतः प्राणो यदा भवति सुव्रते!।
भिन्दतस्तालुग्रन्थिं तु शब्दो घुमघुमायते॥ (४प. ३७१–३७२)

इत्यादि। एवं व्यक्तानां त्रयाणां हृदादिग्रन्थिभेदानुभवविषयकं घोषाद्यष्टधात्वमप्युच्यते।

तदुक्तं—

अष्टधा तु स देवेशि! व्यक्तः शब्दः प्रकीर्तितः।
घोषो रावः स्वनः शब्दः स्फोटाख्यो ध्वनिरेव च॥
झाङ्कारो ध्वङ्कृतश्चैव अष्टौ शब्दाः प्रकीर्तिताः।

---

*३७१ श्लोके स्व. टीकायामुट्टङ्कितं क्षेमराजेन २३३ तमे पृष्ठे।

CC-0 Kashmir Research Institute. Digitized by eGangotri

इति । तदनु तदनन्तरं तालुतो भ्रूमध्यपदाधिरोहे प्रोक्तमात्रात्रयगर्भीकृताशेषभेदपिण्डात्मतया स एव व्यक्तो वर्णोच्चारोऽशेषवेद्याविभागवेदनात्मकबिन्दुरूपतामाश्रयति । एवमग्रतोऽपि बोध्यम् । तस्य बिन्दोर्मन्त्रकलात्मकस्य विभवे तद्ग्रन्थिभेदानुभूयमानस्फोटशब्दादिप्रसरे विरते ऊर्ध्वपदाक्रमणात् प्राशान्ते सति, उपलक्षणमेतदर्धचन्द्रादेः प्रशाम्यद्वेद्यप्रधानतायामर्धचन्द्रत्वं प्रशान्तवेद्यप्रधानतायां निरोधिनीत्वं नादपथप्रवेशरोधकत्वात् । योग्ययोगिनोरध ऊर्ध्वगतिनिरोधनाच्च । अयमेव बिन्दुग्रन्थिभेदो मुमुक्षूणामपवर्गपदाधिरोहे प्रथमसोपानकल्पस्तद्भेदे हि उल्लङ्घित एव जन्मादिकाराबन्ध इत्याहुराचार्याः । तदुक्तं श्रीस्वच्छन्दे—

भ्रुवोर्मध्यं यदागच्छेत् स्फोटशब्दस्तु* जायते ।
बिन्दुं भेदयतो देवि ! शब्दो धुमधुमायते ॥
कपित्थैर्नारिकीलेन आचार्यःसह बिन्दुना ।
अभिन्नेन कुतो मोक्षं सबाह्याभ्यन्तरं प्रिये ! ॥
भित्त्वा बिन्दुं ततो देवि ! अर्धचन्द्रं विभेदयेत् ।
भिद्यतश्चार्धचन्द्रस्य भाले झिमिझिमायते ॥
अर्धचन्द्रं तु भित्त्वा वै भेदयेत्तु निरोधिनीम् ।
तस्यास्तु भिद्यमानायाः शब्दः सिमिसिमायते ॥ (४१. ३७५-७८ पृ.-२३५-३८)

इति बिन्दुग्रन्थिभेदादेवापरग्रन्थिभेद इति विभवपदेनोक्तं ज्ञेयम् । अत्रेश्वरकारणाधिष्ठितानि त्रीण्येतानि स्थानानि गुणीकृतवेद्यभेदत्वात् । ततस्तस्मात् बिन्द्वादिस्थानमुत्क्रम्य समस्तवाचकाविभेदविमर्शप्रधाने नादाख्ये तत्त्वे सदाशिवाख्यकारणाधिष्ठितेऽष्टध्वनिवपुरुपाधिरवच्छेदो यस्य तस्मिन् शून्याद्यष्टध्वनिभिन्ने उपरते तदूर्ध्वपदाक्रमणाद्विलीने सति । एतन्नादान्तभूमेरप्युपलक्षणम् ।

*(स्फोटोऽनभिव्यक्तत्वादशब्दकल्पः) इतिकोष्ठबद्धपाठः श्लोकान्तर्लिखितः ।

CC-0 Kashmir Research Institute. Digitized by eGangotri

एवमुक्तपदेषु सञ्चरन् योगी संवित्प्राधान्येन प्राणभूमिकां गुणीकृत्य तत्तद्रूपतां संवेदयमानस्तन्मयत्वमाप्नोति । नादाष्टविधत्वं यथा सङ्केतपद्धत्याम्—

अष्टधानाहतः प्रोक्तः शून्यादिप्रतिभेदतः ।
शून्यं स्पर्शस्तथा नादो ध्वनिर्बिन्दुस्तथैव च ॥
शक्तिजीवाक्षरं चेति अष्टधानाहतः स्मृतः ।

इति । नादस्य यत्र विश्रान्तिस्तन्नादान्तपदमूर्ध्वकवाटच्छिद्रं द्वयेऽस्मिन् सदाशिवकारणाधिष्ठिते विश्रान्तो महायोगी तत्तत्पदोचितविभूतीरुपभुङ्क्ते । तदुक्तं श्रीस्वच्छन्दे—

निरोधिनीं भेदयित्वा ततो नादं व्रजेद्बुधः ।
वंशशब्दसमः शब्दस्तत्र सूक्ष्मः प्रजायते ॥
भेदयेन्नादसंस्थानं ब्रह्मरन्ध्रं सुदुर्भिदम् ।
भिद्यतो ब्रह्मरन्ध्रस्य शब्दः शुमशुमायते ॥(४प.३८०-८२ पृ२३९-४०)

इति । ततो ब्रह्मरन्ध्रभेदात् शक्तिसम्बन्धिनि पर्वणि ग्रन्थौ व्यापिनीसमनाव्यासिके भेदनक्रमेणाधस्तनत्यागे तदूर्ध्वोर्ध्वपदाधिरूढेः श्रिते प्राप्ते सति । एतदुक्तं भवति शक्तिग्रन्थौ भिद्यमाने तदनुभवाह्लादः स्पृहणीयतमत्वेन योगिना त्यक्तुं न शक्यते इत्यतस्तस्य दुर्भेदत्वं, तदूर्ध्वे शक्त्यन्तसर्वाध्वव्याप्त्या च व्यापिनीस्थानं तत्र व्यापिन्याख्यो मन्त्रावयवः प्रशान्तशब्दव्यासिकत्वादानन्दस्पर्शात्मतामेति इति सञ्चरत्पिपीलिकावत् स्पर्शानुभवस्तत्र योगिसंवेद्योऽस्ति । तदुक्तं श्रीस्वच्छन्दे—

शक्तिमध्यगतः प्राणो वंशनादान्तसंनिभः ।
तां वै तु भेदयेच्छक्तिं दुर्भेद्यां सर्वयोगिनाम् ॥
भिद्यते च यदा शक्तिः शान्तः शुमशुमस्ततः ।

CC-0 Kashmir Research Institute. Digitized by eGangotri

शक्तिं भित्त्वा ततो देवि ! तच्छेषं व्यापिनीभवेत् ।
अनुभावो भवेत्तत्र स्पर्शो यद्वत्पिपीलिका । (४१. ३८२–८४ पृ.-२४०–४१)

इति । तथा—

भित्त्वा वै व्यापिनीं देवि ! समनायां मनस्त्यजेत् ।
मनसा तु मनस्त्यक्त्वा जीवः केवलतां व्रजेत् । (स्व. ४१ ३८७)

इति । अयमाशयः—दिव्यकरणमन्त्रारणिसमुत्तेजनेन मध्योर्ध्ववाह्युदानाग्नितां प्राणे याते शुद्धविज्ञानकेवलरूपतया योग्यात्मा वह्निशिखावत् समनान्तपाशान् दग्ध्वा गाढतरोन्मनापदविश्रान्तिप्रकर्षात् तुर्यातीतदशामासाद्य चिदानन्दघनपरभैरवसमावेशमनुभवति । व्युत्थानेऽपि समावेशप्रकर्षादनुभूतपूर्वस्वानन्दरससंस्काराद् घूर्णमानः सर्ववस्तुप्रत्यक्षीकारित्वादिना मन्त्रमहेश्वरादितुल्यतामेतीति तदुक्तं श्रीस्वच्छन्दे—

भित्त्वाक्रमेण सर्वाणि उन्मनान्तानि यानि तु ।
पूर्वोक्तलक्षणैर्देवि ! त्यक्त्वा स्वच्छन्दतां व्रजेत् ॥
जायते उन्मनस्त्वं हि देहेनानेन साधके ।
संक्रामेत् परदेहेषु क्षुत्तृष्णाभ्यां न बाध्यते ॥
अतीतानागतं चैव त्रैलोक्ये यत्प्रवर्तते ।
प्रत्यक्षं तद्भवेत्तस्य सर्वज्ञत्वञ्च जायते ॥ (७१.३२७-३०पृ.३५०-५१)

इति । करणबन्धलक्षणं यथा श्रीस्वच्छन्दे—

करणं तु ततः कृत्वा लक्षणं तस्य वै शृणु ।
जिह्वा तु तालुके योज्या किञ्चिदूर्ध्वं न संस्पृशेत् ॥
ईषत्प्रसार्य वक्त्रं तु किञ्चिदोष्ठौ न संस्पृशेत् ।
दन्तपङ्क्ती तथैवेह दृष्टिश्चाधोर्ध्ववर्जिता ॥

CC-0 Kashmir Research Institute. Digitized by eGangotri

कायं समुन्नतं कृत्वा करणं दिव्यमुच्यते ।
दिव्यं तु करणं कृत्वा तत्त्वस्योच्चारणं कुरु ॥
कुम्भितश्चैव यः प्राणो रेचयेत्तं शनैः शनैः ।
नाड्यो ग्रन्थिपद्माश्च देहे याः संव्यवस्थिताः ॥
रेचकेन समाक्षिप्ता ऊर्ध्वस्रोतो भवन्ति ते । (४प. ३६५–६९ पृ.-२३०–३२)

इत्यलं प्रसक्तपल्लवितेन ॥१८॥

दर्शनान्तरीयास्तु मुक्तिविप्रतिपत्तयो यथा—

१ स्वातन्त्र्यं मृत्युर्वा मोक्ष इति चार्वाकाः । २ आत्मोच्छेदो मोक्ष इति–शून्यवादिनो माध्यमिकाः । ३ निर्मलज्ञानोदयो मोक्ष इतीतरे बौद्धाः । ४ कर्मकृतस्य देहस्वरूपस्यावरणस्याभावे जीवस्य सततोर्ध्वगमनं मोक्ष इति जैनाः । ५ सर्वकर्तृत्वव्यतिरिक्तानां सर्वज्ञत्वादीनां परमार्थगुणानां प्राप्तिः याथात्म्येन भगवत्स्वरूपानुभवश्च मोक्ष इति रामानुजीयाः ।

६ जगत्कर्तृत्वलक्ष्मीपतित्वश्रीवत्सप्राप्तिरहितं दुःखामिश्रं पूर्णं सुखं मोक्ष इति माध्वाः ।

७ पारमैश्वर्यप्राप्तिर्मोक्ष इतिनकुलीशपाशुपताः ।

८ शिवत्वप्राप्तिरिति शैवाः ।

९ पूर्णात्मतालाभ इति प्रत्यभिज्ञावादिनः ।

१० पारदरसेन देहस्थैर्यो जीवन्मुक्तिरेव मोक्ष इति रसेश्वरवादिनः ।

११ अशेषविशेषगुणोच्छेदो मोक्ष इतिवैशेषिकाः । १२ आत्यन्तिकी दुःखनिवृत्तिरिति नैयायिकाः । नैयायिकैकदेशिनस्तु न तत्र केवला दुःखनिवृत्तिः किन्तु सुखमप्यस्तीत्याहुः । १३ स्वर्गादिप्राप्तिर्मोक्ष इति मीमांसकाः । १४ मुलाधारचक्रस्थाया ब्रह्मरूपायाः परावाचो दर्शनं मोक्ष इति पाणिनीयाः । १५ प्रकृत्युपरमे पुरुषस्य स्वरूपेणावस्थानं मोक्ष इति सांख्याः । १६ कृतकर्त-

CC-0 Kashmir Research Institute. Digitized by eGangotri

व्यतयापुरुषार्थशून्यानां सत्त्वरजस्तमसां मूलप्रकृतावत्यन्तलयः प्रकृतेर्मोक्षः । चितिशक्तेस्तु निरुपाधिकस्वरूपेणावस्थानं मोक्ष इति पातञ्जलाः ।

१७ मूलाज्ञाननिवृत्तौ स्वस्वरूपाधिगमो मोक्ष इत्यद्वैतवेदान्तिनः । भवस्तु बन्धः चेतनस्य चितिशक्तेरचिता जडदेहादिना सह सम्बन्धात्मा ॥

इदानीं स्वसंविन्मय्याः परदेवताया एव भजनमैकान्तिकतया भक्तानामभिलषणीयं नान्यदित्याह—

**परानन्दाकारां निरवधिशिवैश्वर्यवपुषं**
**निराकारज्ञानप्रकृतिमपरिच्छिन्नकरुणाम् ।**
**सवित्रीं लोकानां* निरतिशयधामास्पदपदां**
**भवो वा मोक्षो वा भवतु भवतीमेव भजताम् ॥ १६ ॥**

हे अम्बेत्यामन्त्रणपदमध्याहार्यमन्यथा भवतीमिति प्रत्यक्षतानिर्देशस्यानुपपत्तेः । भवतीं स्वसंविन्मयीं त्वामेव भजतां समाविशतां भवो वा भवतु मोक्षो वा, उभयत्र त्वत्समावेशवैवश्यमहिम्ना परमानन्दरसास्वादनिमग्नचित्ततया भेदावभासविगलनात् द्वयोरप्यनयोरैकरस्यायमानत्वेन प्रकाशैकपरमार्थतया परामर्शनाच्च । तदुक्तमुत्पलदेवपादैः—

दुःखान्यपि सुखायन्ते विषमप्यमृतायते ।
मोक्षायते च संसारो यत्र मार्गः स शाङ्करः ॥ (उ. स्तो. २० श्लो. १२)

इत्येतदेवाभिप्रेत्य श्रीमदभिनवगुप्तपादैरपि—

स्वतन्त्रः स्वच्छात्मा स्फुरति सततं चेतनशिवः

*भूतानामिति पाठान्तरम् ।

CC-0 Kashmir Research Institute. Digitized by eGangotri

परशक्तिश्चेयं करणसरणिप्रान्तमुदिता ।
तदाभोगैकात्म स्फुरति च समस्तं जगदिदं
न जाने कुत्रायं ध्वनिरनुपतेत् संसृतिरिति ॥

कीदृशीं परानन्दाकारां परोऽपरिच्छिन्नत्वेन पूर्णो ब्रह्मानन्दाख्य आनन्द आकारः स्वरूपं यस्याः मानुषानन्दात्प्रभृति प्राजापत्यानन्दपर्यन्तानामानन्दानामुत्तरोत्तराधिक्येनाम्नातानां परिच्छिन्नत्वादपरिच्छिन्ने ब्रह्मानन्दे एव पुरुषार्थोपयोगित्वपर्यवसायित्वम् । 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति इति' श्रुतेः, एतेन परदेवताया आनन्दसागररूपत्वमिन्द्राद्यानन्दानां तद्बिन्दुरूपत्वमित्युपक्षिप्तम् । तदुक्तमभियुक्तैः—

त्रैलोक्येऽप्यत्र यो यावानानन्दः कश्चिदीक्ष्यते ।
स बिन्दुर्यस्य तं वन्दे देवमानन्दसागरम् ॥ (स्त. चि. श्लो.६१)

इति । अथ च परः पूर्णो निरानन्दादिषडानन्दभूमिकानां सामरस्यरूप-आनन्दः स्वविश्रान्तिलक्षण आकारो मूर्तिर्यस्या जगदानन्दस्वरूपामित्यर्थः तदुक्तं चिद्गगनचन्द्रिकायाम्—

*यत्परो निरुपसर्गतः परःस्यान्महानपि च केवलः शिवे ! ।
उत्तरश्च विषयात् स च त्वदानन्द उल्लससि तद्घनासि यत् ॥(श्लो.२२३)

इति । विस्तृतं चैतत् तन्त्रालोके—

निजानन्दे प्रमात्रंशमात्रे हृदि पुरास्थितः ।
शून्यतामात्रविश्रान्ते निरानन्दं विभावयेत् ॥
प्राणोदये प्रमेये तु परानन्दं विभावयेत् ॥

---

*यः परो निरुपसर्गतः इति मु. पु. पाठः ।

CC-0 Kashmir Research Institute. Digitized by eGangotri

तत्रानन्तप्रमेयांशपूरणापाननिर्वृतः ॥
परानन्दगतस्तिष्ठेदपानशशिशोभितः ।
ततोऽनन्तस्फुरन्मेयसंघट्टैकान्तनिर्वृतः ॥
समानभूमिमागत्य ब्रह्मानन्दमयो भवेत् ।
ततोऽपि मानमेयौघकलनाग्रासतत्परः ॥
उदानवह्नौ विश्रान्तो महानन्दं विभावयेत् ।
ततो विश्रान्तिमभ्येत्य शाम्यत्यस्मिन्महार्चिषि ॥
निरुपाधिर्महाव्याप्तिर्ध्यानाख्योपाधिवर्जिता ।
तदा खलु चिदानन्दो यो जडानुपबृंहितः ॥
नह्यत्र संस्थितिः कापि विभक्ता जडरूपिणः ।
यत्र कोऽपि व्यवच्छेदो नास्ति यद्विश्वतः स्फुरत् ।
यदनाहतसंवित्तिपरमानन्दबृंहितम् ॥
यत्रास्तिभावनादीनां न मुख्या कापि सङ्गतिः ।
तदेव जगदानन्दमस्मभ्यं शम्भुरूचिवान् ॥ (तं५आ. श्लो.४८–५२-पृ. ३४८–५५)

इति । तथा निष्क्रान्तमवधिं सीमानं निरवधिदेशाद्यसङ्कुचितत्वाद्यच्छिवस्येच्छाज्ञानाद्यनन्तशक्तिचक्रनिर्भरप्रकाशाह्लादस्वभावस्यानुत्तरपरशिवभट्टारकस्यैश्वर्यं महिमा शिवादिपृथिव्यन्ततत्तदसंख्यबाह्यार्थनिवहवैचित्र्यविजृम्भोद्भावनप्रागल्भ्यं तद्वपुःस्वरूपं यस्याः । पूर्वत्र शिवेन सह पराह्लादसामरस्यावस्था निर्दिष्टा, अत्र तु विश्वोल्लेखनौन्मुख्यावस्थेतिविशेषः तदुक्तम्—

*सर्वव्यापकताभूमिर्ज्ञत्वकर्तृत्वसंमता
निजाभासचमत्कारमयी शिवदशा स्मृता ॥

---

*विज्ञानेन्दुकौमुदीत उद्धृतमिदम् ।

CC-0 Kashmir Research Institute. Digitized by eGangotri

इति । श्री परासूक्तेऽपि—

कृत्येषु देवि ! तव सृष्टिमुखेषु नित्यं
स्वाभाविकेषु विसरत्सु यदुन्मुखत्वम् ।
इच्छेति तत्किल निरूपितमागमज्ञै-
र्जानासि येन विदधासि च तं तमर्थम् ॥

इति । पूजारहस्येऽपि—

औन्मुख्यमिच्छाज्ञानं च क्रियेत्येतच्चतुष्टयम् ।
स्पन्दनं देवदेवस्य बोधभैरवरूपिणः ॥
औदासीन्यप्रहाणेन यदौन्मुख्यं महीशितुः ।
तदिदं स्याज्जगत्सर्वमित्यस्मिन् किं नु युक्तिभिः ॥

इति । यद्वा शिवस्यैश्वर्यमणिमाद्यात्मकं तद्वपुर्यस्यास्तन्मूर्त्यापि समुल्लसन्तीमित्यर्थः । अणिमादिलक्षणानि प्राक् प्रपञ्चितानि । तथा निष्क्रान्ता आकारा अवयवसंस्थानविशेषा अहन्तेदन्ताशाखारूपा यस्मात्तत्तथाविधं ज्ञानं सदाशिवेश्वरादिभूमिकोचितपरामर्शस्तस्य प्रकृतिं कारणम् । अथ च ज्ञानं प्रकृतिः स्वभावो यस्याः स्वानन्दचमत्कारोच्छलत्तातारतम्येन तत्तत्तत्त्वदशाभिशायिनीमित्यर्थः । इत्थं त्रिभिर्विशेषणैर्बहिर्भावावबिभासयिषायां शुद्धभेदावभासदशासमुल्लासेनैकैव पराशक्तिः स्वस्वातन्त्र्याच्छिवादितत्त्वपञ्चकं शुद्धस्वातन्त्र्यमयमवभासयतीत्युच्यते तदुक्तं श्रीमदभिनवगुप्तपादैः—

शिवः स्वतन्त्रदृग्रूपः पञ्चशक्तिसुनिर्भरः ।
स्वातन्त्र्यभासितभिदा पञ्चधा प्रविभज्यते ॥
चिदानन्दैषणाज्ञानक्रियाणां सुस्फुटत्वतः ।
शिवशक्तिसदेशानविद्याख्यं तत्त्वपञ्चकम् ॥
एकैकत्रापि तत्त्वेऽस्मिन् सर्वशक्तिसुनिर्भरे ।

CC-0 Kashmir Research Institute. Digitized by eGangotri

तत्तत् प्राधान्ययोगेन स सभेदो निरूप्यते ॥ (तं. आ ९श्लो. ४९-५२)

इति । तथा—

शिवशक्तिसदाशिवतामीश्वरविद्यामयीं च तत्त्वदशाम् ।

शक्तीनां पञ्चानां विभक्तभावेन भासयति ॥ (प. सा. श्लो. १४)

इति, स्पष्टीकृतं चैतज्जयरथाचार्यैः—

इह खलु चिन्मात्रस्वभावः पर एव शिवः पूर्णत्वान्निराशंसोऽपि स्वस्वातन्त्र्यमाहात्म्याद् बहिरुल्लिलसिषया परानन्दचमत्कारतारतम्येन प्रथममहमिति परामर्शितया शक्तिदशामधिशयानः प्रस्फुरेत्, अनन्तरं चाहमिदमिति परामर्शशाखाद्वयमवभासयेत् । तत्र च शुद्धचिन्मात्राधिकरण एव अहमित्यंशे यदा परमेश्वरः इदमंशं समुल्लासयति तदा तस्य प्रोन्मीलितमात्रचित्रकल्पभावराशिविषयत्वेनास्फुटत्वादिच्छाप्रधानं सदाशिवतत्त्वमहमिदमिति । भावराशौ पुनः स्फुटीभूते तदधिकरणे एवेदमंशे यदाहमंशं निषिञ्चति तदाज्ञानशक्तिप्रधानमीश्वरतत्त्वमहमिदमिति । अत एव चाहंविमर्शस्याविशेषेऽप्यत्रेदमंशस्य ध्यामलत्वाध्यामलत्वाभ्यामयं विशेषः । यदा पुनः प्ररूढभेदभावराशिगतेदमंशस्फुरणे चिन्मात्रगतत्वेनाहमंशः समुल्लसति, तदा द्वैतवादिनामिवेश्वरस्य यः समधृततुलापुटन्यायेनाहमिति परामर्शस्तत्क्रियाशक्तिप्रधानं विद्यातत्त्वमिति विभागः । यद्यपि परशिवस्यैवेदमेकघनमैश्वर्यं तथापि तस्य यथा बहिरौन्मुख्येन व्यापारः शक्तितत्त्वं, तथा सदाशिवेश्वरयोरपि विद्यातत्त्वमिति ।

यद्वा आकारेभ्यो विशिष्टज्ञानात्मकेभ्यो निर्गतं यद् देशकालाद्यपरिच्छिन्नत्वाज्ज्ञानं सामान्यरूपं तस्य प्रकृतिं, एतेन 'सत्तैव महानात्मेति' मतं निरस्तम् । विज्ञानवादिनो हि विज्ञानं निराकारं मन्यन्ते आकारसमर्पकबाह्यार्थापह्नवहेवाकित्वात्साकारविज्ञानवादिनां माध्यमिकानान्तु मतमपि निरस्तमितिबोध्यम् ।

CC-0 Kashmir Research Institute. Digitized by eGangotri

तथा अपरिच्छिन्नकरुणामपरिच्छिन्ना निःसीमा करुणा दया यस्यास्तामपारकारुण्यैकमूर्तिं सदैव भक्तानां चरमकृत्यकारिणीमित्यर्थः । तथा लोकानां भुवनानां सवित्रीं जननीम् । उपलक्षणमेतत्तेन भुवनोपलक्षितानां षण्णामध्वनामित्यर्थः । यद्वा लोकयन्तीतिलोका रुद्रक्षेत्रज्ञप्रमातारस्तेषां सवित्रीं वा एवं जडाजडात्मविश्वसृष्टिकारिणीम् । तदुक्तं देवीपुराणे—

ब्रह्माद्याः स्थावरान्ताश्च यस्याःसर्वे समुद्गताः ।
महदादि विशेषान्तं जगद्यस्याः समुद्गतम् ॥
तामेव सकलार्थानां प्रसवित्रीं परां नुमः ।

इति । इत्थमियता शुद्धाध्वस्फुरत्स्वरूपत्वेऽपि अनुत्तरप्राच्यस्वभावादसावप्रच्युतैवेत्याह— निरतीति, निरतिशयमनुत्तरं यद्धाम्नामिच्छादितिसृणां शक्तीनां परादित्रिशक्तीनामात्मादित्रितत्त्वानां वा ज्ञातृज्ञेयज्ञानात्मनां वास्पदं प्रतिष्ठा ब्रह्म "ब्रह्मपुच्छं प्रतिष्ठा" इति श्रुतेस्तत्र पदं स्थानं तत्सारात्मत्वाद्यस्यास्तां, निर्विमर्शस्य ब्रह्मप्रकाशस्य शिलावत्तुच्छत्वादितिभावः ॥१९॥

इदानीं स्थूलतरोपक्रमेण बाह्यार्थविलयचिन्तनयुक्त्यान्तस्तरां महाव्योमाख्यचित्पदानुप्रवेशे स्वात्माभिन्नपरदेवतानुभवंपरामृशंस्स्तौति—

**जगत्काये कृत्वा तमपि हृदये तच्चपुरुषे**
**पुमांसं बिन्दुस्थं तमपि परनादाख्यगहने ।**
**तदेतज्ज्ञानाख्ये तदपि परमानन्दविभवे**
**महाव्योमाकारे त्वदनुभवशीलो विजयते ॥२०॥**

ब्रह्माण्डपिण्डाण्डयो सृष्टिः समानरूपैव, ब्रह्माण्डमपिविराट् संज्ञकजीवविशेषस्य शरीरं पिण्डाण्डमस्मदादेःशरीरमतस्तयोरेकैव प्रक्रिया केवलं

CC-0 Kashmir Research Institute. Digitized by eGangotri

महत्वाल्पत्वाभ्यां कृतो भेदः 'यदन्तस्तद्बहि'रितिन्यायादित्यभिप्रायेण भुवनादिषडध्वलक्षणं जगत् काये स्वकीयेशरीरे कृत्वा ।

*सर्वतत्त्वमयः कायस्तं चेदानीं शृणु प्रिये ! ।
पृथिवी कठिनत्वेन द्रवत्वेऽम्भः प्रकीर्तितम् ॥

इत्युपक्रम्य,

'त्रिशिरो भैरवः साक्षाद्व्याप्य विश्वं व्यवस्थितः' ।

इत्युक्तनीत्या, विमृश्य तदभेदव्याप्तिसारं सम्पाद्यागमेषु षडध्वस्थिति-प्रक्रिया देहस्था प्रदर्शिता तत एव ज्ञेया । तं कायमपि हृदये कृत्वा हृदयस्य सर्वशरीरसारत्वात् । असति तस्मिन् शरीरस्थित्यनुपपत्तेः, तच्च हृदयं पुरुषे हृत्पद्ममण्डलान्तस्थे सङ्कोचप्राधान्यात्प्ररूढभेदे नरात्मके हृद्बिन्दौ कृत्वा तदन्तःस्थत्वेनैव हृत्कमलगोलकस्यप्रतिष्ठानात् । नरबिन्द्वात्मकं पुमांसं शिवबिन्दुस्थं कृत्वा विमृश्य, तदुक्तम्—

सोमरविवह्निलक्षणभोग्येन्द्रियभानपिण्डात्मा ।
बिन्दुर्विमर्शधर्मा षण्णामेकोऽध्वनां प्राणः ॥

इति । अयमत्राशयः परप्रकाशात्मपरप्रमातृरूपो बिन्दुः स्वस्वातन्त्र्येण विश्वमवबिभावयिषुर्मितप्रमातृभावमवलम्ब्य तत्र हृदयभ्रूमध्यद्वादशान्तलक्षणेषु स्थानेषु विश्रान्तिभेदान्नरशक्तिशिवात्मतामवभासयतीति बोध्यम् । अतो विगलितसङ्कोचतया स शिवबिन्दुरिति, बिन्दोरेव पुरुषभूमिकाग्रहणाद्भेदविलापने पुनस्तस्यस्वस्वभावप्रत्यापत्तिः सम्पद्यते । तदुक्तम्—

†या सा शक्तिः परा सूक्ष्मा निराचारे त कीर्तिता ।
हृद्बिन्दुं वेष्टयित्वाऽन्तः सुषुप्तभुजगाकृतिः ॥

इति । तथा—

---

*त्रिशिरोभैरवस्येदं पद्यम् । †तन्त्रसद्भावस्येदंपद्यम् ।

CC-0 Kashmir Research Institute. Digitized by eGangotri

अत्र प्रकाशमात्रं यत् स्थिते धामत्रयेसति ।
उक्तं बिन्दुतया शास्त्रे शिवबिन्दुरसौ मतः ॥(त.आ.३आ.श्लो.१३३-३४)

इति । तथा तं बिन्दुमपि परनादाख्ये अकृतकाहन्तेदन्तासामानाधिकरण्यविमर्शात्मकपरचित्प्रकाशात्मनादभट्टारकनाम्नि गहने गुहायां कृत्वा तत्र प्रत्यावृत्त्या विलाप्य तदेतत्परनादात्मकं तत्त्वं ज्ञानाख्येऽनादिबोधात्मकेऽकुलधाम्नि विश्वोत्तीर्णे चित्प्रकाशे विलाप्य तद्विश्वोत्तीर्णस्वरूपमपि परमे पूर्णैश्वर्यशालिन्यानन्दविभवे आनन्दशक्त्यात्मनि विश्वोतीर्णविश्वमयशिवशक्तिसामरस्यात्मनि कृत्वा संचिन्त्य, तदनन्तरं विगलितसमस्तवेद्याभासशून्यातिशून्यपदात्मकं महाव्योम चिदम्बरमाकारो मूर्तिर्यस्यास्तसम्बोधो हे महाव्योमाकारे ! इत्थं विश्ववैचित्र्योल्लासविलयास्पदत्वेऽपि प्रकाशमात्रस्वभावाया अस्याः स्वात्मनि न कश्चिद्विशेषो जात इति कटाक्षयितुं व्योम्ना निरूपणं कृतम् । त्वदनुभवं तव स्वसंविदभेदेन पारिशेष्याद्व्यवधानेन भासमानायाः पराशक्तेरनुभवमनुभूतिं निराभासपराहंभावचमत्कारमयीं शीलयतीति शील अभ्यस्यन् योगी विजयते अनुत्तरचिदानन्दघनस्वतन्त्रधामप्राप्त्या सर्वोत्कृष्टो भवतीत्यर्थः । तदुक्तं विज्ञानभैरवे—

भुवनाध्वादिरूपेण चिन्तयेत्क्रमशोऽखिलम् ।
स्थूलसूक्ष्मपरस्थित्या यावदन्ते मनोलयः ॥ (श्लो. ५६)

इति । तथा—

स्वदेहे जगतो वापि सूक्ष्मसूक्ष्मतराणि च ।
तत्त्वानि यातानि* लयं ध्यात्वान्ते व्यज्यते परा ॥ (श्लो.५४)

इति । अथच—

अथेदानीं लययोगानुशीलनरीत्या प्रणवांशमात्राणामुपर्युपरि विलय-

---

*यानि इति मु. पु पाठः ।

CC-0 Kashmir Research Institute. Digitized by eGangotri

धारणामभ्यस्यतो योगिनः स्वसंविदात्मपरचिच्छक्त्युपलम्भप्रकारं जगत्काये इत्यादिनाह—

जगद्व्यष्टिसमष्टिभावेन स्थितं स्वशरीरलक्षणं वैराजं च काये तच्छरीराभिमानिनि व्यष्टिसमष्टिस्थूलोपहिते विश्ववैश्वानरपदवाच्येऽकारसंज्ञे चैतन्ये कृत्वा द्रष्टारं विना दृश्यसत्ताया असद्भावात्तत्र विलाप्येत्यर्थः। तमुक्तलक्षणं कायं हृदये तथाविधसूक्ष्मभूतोपाध्युपहितचैतन्ये तैजसहिरण्यगर्भपदवाच्ये उकारसंज्ञे विलाप्य, तच्च प्रोक्तरूपं हृदयं पुरुषे व्यष्टिसमष्टिकारणोपहितचैतन्ये प्राज्ञेश्वरपदवाच्ये मकारसंज्ञे विलापयेत्। एतेषां त्रयाणामेव ब्रह्मविष्णुरुद्रपदैरभिधेयत्वं तान्त्रिकाभिमतं ज्ञेयम्। तं पुमांसमुक्तरूपं बिन्दुस्थं कृत्वा बिन्दुमात्रायां महाकारणशरीराभिमानिनि तुरीयचैतन्यमात्रेऽन्तर्यामिपदवाच्ये संहरेत्। तदुक्तमध्यात्मरामायणे—

अकारसंज्ञः पुरुषो हि विश्वको
ह्युकारकस्तैजस ईर्यते क्रमात्।
प्राज्ञो मकारः परिपठ्यतेऽखिलैः
समाधिपूर्वं नतु तत्त्वतो भवेत्॥
विश्वं त्वकारं पुरुषं विलापयेद्
उकारमध्ये बहुधा व्यवस्थितम्।
ततो मकारे प्रविलाप्य तैजसं
द्वितीयवर्णं प्रणवस्य चान्तिमम्॥
मकारमप्यात्मनि चिद्घने परं*
विलापयेत्प्राज्ञमपीह कारणम्॥ (उत्त. कां., श्लो. ४९–५१)

इत्यादि। तमपि बिन्दुं परनादाख्यगहने नादमात्रायां शब्दब्रह्मात्मनि, तदेतज्ज्ञानाख्ये ज्ञानशक्तौ, तदपि ज्ञानं परमानन्दविभवे शान्ताख्ये तेजसि पार्यन्तिके

*परे इति मु. पु. पाठः।

CC-0 Kashmir Research Institute. Digitized by eGangotri

पदे तत्रैवमुपसंहरन् हे महाव्योमाकारे ! परमाकाशस्वरूपे ! महाकामकला-त्वेन समुपलक्षणीयत्वत्स्वरूपानुभवशीलो योगी विजयते ब्रह्मभूयंगतो निर्वाण-पदमेतीत्यर्थः । तदेतदाचार्यपादैः प्रपञ्चसारे विवृतम्—

उच्चार्योच्चार्य तं क्रमान्नयेदुपरिषड्द्वयान्तान्तम् ।
मनसा स्मृते यदास्मिन् मनो लयं याति तावदभ्यस्येत् ॥ (प. १९-श्लो. ३६)

इत्यारभ्य—

अथवादिबीजमौ पुनरुमपि विषे तमपि संहरेद्बिन्दौ ।
बिन्दुं नादे तमपि शक्तौ शक्तिं तथैव शान्ताख्ये ॥
तेजस्यनन्यगे चिति निर्द्वन्द्वे निष्कले सदानन्दे ।
सूक्ष्मे च सर्वतो मुखकरपदनयनादिलक्षणे लक्ष्ये ॥
स्वामिनि संहृत्यैवं करणेन्द्रियवर्गनिर्गमापेतः ।
प्रविलीनपुण्यपापो निरुच्छ्वसन् ब्रह्मभूत एव स्यात् ॥ (प. १९,-श्लो. ४२–४४)

इति । सूक्ष्मे चेत्यनेन महाकामकलाया ध्यानसूचनं कृतमित्युपदेश-धनैरूह्यम् मिति ॥२०॥

ननु कथं समनन्तरोक्तस्वरूपानुभवः स्यादित्याशङ्क्य तत्प्राप्तिकारणमलौ-किकीं भक्तिमास्वादयितुमनेकामन्त्रणपदैर्भगवतीं स्वाभिमुखीकाराय स्तौतिः—

**विधे विद्ये वेद्ये विविधसमये वेदजननि !**
**विचित्रे ! विश्वाद्ये ! विनयसुलभे वेदगुलिके ! ।**
**शिवाज्ञे शीलस्थे ! शिवपदवदान्ये ! शिवनिधे !**
**शिवे मातर्मह्यं त्वयि वितर भक्तिं निरुपमाम् ॥२१॥**

CC-0 Kashmir Research Institute. Digitized by eGangotri

हे मातरशेषविश्वनिर्माणकारिणि ! त्वं त्वयि त्वद्विषयां भक्तिं परानुरक्ति-लक्षणां स्मरणकीर्तनादिप्रकारां वा निरुपमामनौपम्यां वितर देहि, भक्तिप्रार्थ-नायामयमाशयः । यद्भक्त्यैव परया दर्शनात्प्रभृति समावेशपर्यन्तं परमवि-भूत्युल्लासः सम्पद्यतेऽव्यक्तस्यापि ब्रह्मतत्त्वस्य व्यक्ततासंभवात् । यद्गीतम्—

भक्त्या त्वनन्यया शक्यमहमेवंविधोऽर्जुन ।
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप ॥ (भ. गी.अ. ११, श्लो. ५४)

इति । अत्र प्रवेष्टुमित्यनेन चित्सामरस्यात्मा परामुक्तिरभिहिता, सापि भक्त्यैव प्राप्तुं सुशकेति । एवमपरयापि स्मरणकीर्तनादिसोपानाश्रयणद्वारा क्रमेण सर्वोर्ध्वपदसमासादनं स्यादिति भक्तिरेव परमभिलषणीया तदुक्तमुत्पल-देवैः—

भक्तिलक्ष्मीसमृद्धानां किमन्यदुपयाचितम् ।
एनया वा दरिद्राणां किमन्यदुपयाचितम् ॥ (उ. स्तो. २०-११)

इति । विधे ! इत्याद्यामन्त्रणपदान्यत्र विशेषणभावेन योज्यानि त्वं कीदृशी विदधाति सृष्टिं करोतीतिविधिः सृष्टिकर्त्री । तदुक्तं देवीपुराणे—

"शक्तिः करोति ब्रह्माण्डमिति", शक्तिसूत्रेऽपि—

चितिःस्वतन्त्रा विश्वसिद्धिहेतुरिति, (प्र. हृ., सू. १) चतुःशत्यां च—

त्रैलोक्यं संसृजत्येषा त्रिपुरा परिकीर्त्यते ।

इति । यद्वा चोदनालक्षणावाज्ञाविधिर्नियतिशक्तिर्यत् पारतन्त्र्येण ब्रह्मादयः स्वे स्वे कार्ये प्रवृत्ताः सन्ति । "भीषास्मात्पवते वायुरिति"–श्रुतेः । वेत्ति विन्ते वा ययेति विद्या अनुत्तरात्मज्ञानप्रदत्वाद् ब्रह्मविद्या, यद्वा श्रीविद्या परमशिव मुखकमलनिसृता पञ्चदशी स्वरूपा, कर्मविद्या वा, विश्वरूपाद्युपा-सना वा, एतदेव विद्याचतुष्टयमात्मविद्या-गुह्यविद्या-यज्ञविद्या-महाविद्या चेति

CC-0 Kashmir Research Institute. Digitized by eGangotri

नामभिरुक्तम् । तदुक्तं विष्णुपुराणे—

यज्ञविद्या महाविद्या गुह्यविद्या च शोभने ।
आत्मविद्या च देवि ! त्वं विमुक्तिफलदायिनी ॥
आन्वीक्षिकी त्रयी वार्ता दण्डनीतिस्त्वमेव च ।

इति । यद्वा स्वतन्त्रपरचित्प्रकाश एवान्तर्बहिः प्रस्फुरतीत्येवमात्मना ज्ञानं विद्या, तदुक्तं लिङ्गपुराणे—

आत्माकारेण संवित्तिर्बुधैर्विद्येति कथ्यते* ।
विकल्परहितं तत्त्वं परमित्यभिधीयते ॥ (अ. १५. श्लो. २१–२२)

इति । तथान्यत्र—

मायाकार्यविवेकेन वेत्ति विद्यापदं यया ।
सा कला परमा ज्ञेया विद्याज्ञानक्रियात्मिका ॥

इति । तथा स्वात्मभावेन वेत्तुं विचारयितुं वा योग्येति वेद्या, यस्यां विज्ञातायां विज्ञेयांशान्तरानवशेषात् ।

'यज्ज्ञात्वानेह भूयोऽन्यज्ज्ञातव्यमवशिष्यते ।

इति स्मृतेः । "यस्मिन्विज्ञाते सर्वमिदंविज्ञातंस्यादिति" श्रुतेः अथ च श्रुतिस्मृतिभिर्ज्ञेया सर्ववेदान्तानां तत्रैव तत्पर्यात् "वेदैश्च सर्वैरहमेव वेद्यः" (भ. गी. १५-१५) इति स्मृतेः । "सर्वे वेदा यत्पदमामनन्ति" कठो. २-१५ इति श्रुतेश्च । अथ च सार्वात्म्याच्च वेत्तुं शक्यार्हा च । यद्वा अवेद्ये ! इत्यकारविश्लेषे वेदितृस्वभावतया प्रथमानायामस्यां परस्यां चिच्छक्तौ सर्वप्रमाणजीवितप्रायायामभिनवाभासात्मकेन केनापि कारकज्ञापकाभ्युपगतेन प्रमाणवराकेण व्यापरितुमशक्यत्वात् तदविषयेत्यर्थः । यच्छ्रुतिः—

"येनेदं सर्वं विजानाति तं केन विजानीयाद्विज्ञातारमरे केन

---

*कीर्त्यते इति मु. पु. पाठः ।

CC-0 Kashmir Research Institute. Digitized by eGangotri

विजानीयादिति (बृह. २-४-१४) "स वेत्ति वेद्यं न च
तस्यास्ति वेत्ते"तिच (श्वेता. ३–१९) ।

तथान्यत्र—

स्वपदा स्वशिरच्छायां यद्वल्लङ्घितुमीहते ।
पादोद्देशे शिरो न स्यात्तथेयं बैन्दवी कला ॥

इति । तथा विविधा बहुविद्या समया कृतनित्यक्रियार्चादेर्न्यूनातिरिक्तदोषप्रायश्चित्त्यै पूरणकर्त्री समयाख्या विद्या । यद्वा शाम्भवान्वये तैजसरश्मिमुख्यभूता समयाम्बा नाम देवी तद्रूपा वा । तदुक्तमाचार्यवरैः—

तव स्वाधिष्ठाने हुतवहमधिष्ठाय निरतं
तमीडे संवर्तं जननि ! महतीं तां च समयाम् ।
यदालोके लोकान् दहति महति क्रोधकलिते
दयार्द्रा दृष्टिस्ते शिशिरमुपचारं रचयति ॥ (आ. ल. श्लो. ३७)

इति । सापि विविधा विगता विधा प्रकारो यस्याः सः निरुपमेत्यर्थः । अथ च पञ्चसमयास्वरूपा । तदुक्तम्—

श्रीविद्या बगलाचैव कालरात्रिस्तथैवच ।
जयदुर्गा च्छिन्नमस्ता समयाः परिकीर्तिताः ॥

इति । यद्वा विविधास्त्रिप्रकाराः समयाश्चक्रमन्त्रपूजारूपाःसङ्केताः यस्याः सा । तदुक्तमुत्तरचतुःशत्याम्

चक्रसङ्केतको मन्त्रपूजासङ्केतको तथा ।
त्रिविधस्त्रिपुरादेव्याः सङ्केतः परमेश्वरि ! ॥

---

*दयार्द्राभिर्दृग्भिरिति मु. पु. पाठः ।

CC-0 Kashmir Research Institute. Digitized by eGangotri

इति। यथा कृतसमयं कामियुगलं क्वापि निवासात् सामोदं विलसत्येवं श्रीचक्रादौ कामेश्वरीकामेश्वरावित्याद्यभ्यूह्यम्। तथा वेदानामृक्सामयजुषां जनन्युत्पादिका "अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदः, बृह. २-४-१० यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै" इत्यादिश्रुतेः। "ऋचः सामानि जज्ञिरे" इति च। देवीपुराणेच—

यतः शृङ्गाटकाकारकुण्डलिन्याः समुद्गताः।
स्वराश्च व्यञ्जनानीति वेदमाता ततः स्मृता॥

इति। "शास्त्रयोनित्वादिति १-१-३" ब्रह्मसूत्रेऽपि। ब्रह्माण्डपुराणे तु—

निश्वासमारुतैर्वेदानृचं सामयजुस्तथा
आथर्वणमहामन्त्रानभिमानेन चासृजत्॥
काव्यनाट्याद्यलङ्कारानसृजन्मधुरोक्तिभिः।
सरस्वती च जिह्वायाः ससर्ज सकलप्रसूः॥
चुलुकेन चकोराक्षी वेदाङ्गानि ससर्ज षट्।
मीमांसां धर्मशास्त्रं च पुराणं धर्मसंहिताम्॥
कण्ठोर्ध्वरेखातन्त्रेण ससर्ज सकलाम्बिका।
आयुर्वेदं धनुर्वेदं कण्ठमध्यस्थरेखया॥
चतुःषष्टिं च विद्यानां कण्ठकूपभुवासृजत्।
तन्त्राणि सकलाङ्गेभ्यो दोर्मूलान्मदनागमम्॥

इत्यादि। तथा विनिर्गतानि चित्राणि शिवादिधरण्यन्तविश्वालेख्यानि यस्याः सकाशात्। विनिर्गता चित्राघटघटनापटीयसी मायाशक्तिर्यस्या इति वा। यद्वा विचित्रात्यद्भुतस्वरूपा, "आश्चर्यवत्पश्यति कश्चिदेनमिति" स्मृतेः "आश्चर्योऽस्य वक्ता" इतिश्रुतेश्च। अथ च विविधानि चित्राणि कामेश्वर्या-

CC-0 Kashmir Research Institute. Digitized by eGangotri

द्याकारात्मकानि यस्याः । तदुक्तम्—

अनेककोटिभेदैस्तु गदितं त्रैपुरं महः ।
तत्र मध्ये परा दीप्ता महात्रिपुरसुन्दरी ॥

इति । यद्वा कामेश्वर्यादिपञ्चदशनित्यासु विचित्राख्या नित्याशक्तिः । तथा—'विश्वं विष्णुर्वषट्कारः' इत्युक्तेर्विश्वस्माद्विष्णोरप्यादौ प्रथमं भवानन्दजास्वरूपा गोविन्दभगिनीरूपत्वात् । "अहमस्मि प्रथमजा ऋतस्य" इतिश्रुतेः । अथ च विश्वस्य षडध्वात्मकस्याद्या आदौ भवा परा भट्टारिकाशक्तिर्बीजरूपा । तदुक्तं त्रीशिकायाम्—

यथा न्यग्रोधबीजस्थः शक्तिरूपो महाद्रुमः ।
तथा हृदयबीजस्थं विश्व*मेतच्चाराचरम् ॥ (२४ श्लो.)

इति, तथा—

विनयन्ते देवर्ष्यादि ऋणं निर्यातयन्ते इति विनयाः पचाद्यच् । विनयन्ते क्रत्वर्थं धनादिकं विनियुञ्जते इति वा तैर्धार्मिकैः सुलभा । अत्र विपूर्वस्य नयतेरात्मनेपदवाच्यविगणनव्ययार्थवृत्तितयोक्तार्थव्याख्यानमतएवात्मनेपदिना विग्रहः इति सद्भिर्गम्यम् । यद्वा विनयस्तन्त्रप्रधानं शास्त्रं लौकिकसिद्धिप्रचुरं वाममार्ग इत्यर्थस्तेन सुलभा सुखेनाक्लेशेन लब्धुं शक्या । विनय शब्देन वाममार्गो विरुद्धाचारतया हेयत्वेन तन्त्रान्तरेष्वभिहितः, तदुक्तं रत्नमालायाम्—

————वामं सिद्धिसमाकुलम् ।
स्वल्पपुण्यं बहुक्लेशं स्वप्रतीति विवर्जितम् ॥
मोक्षविद्याविहीनञ्च विनयं त्यज दूरतः ।

---

*जगदिति मु. पाठः ।

CC-0 Kashmir Research Institute. Digitized by eGangotri

इति । यद्वा विनष्टो नय आचारो येषु ते विनयाः कुलाचारवन्तः कौलिकास्तदागमाश्च तैस्तेषु च सुलभा सुखोपायेन प्राप्या । तदुक्तम्—

सर्वेभ्यश्चोत्तमा वेदा वेदेभ्यो वैष्णवं मतम् ।
वैष्णवादुत्तमं शैवं शैवाद् दक्षिणमुत्तमम् ॥
दक्षिणादुत्तमं वामं वामात् सिद्धान्तमुत्तमम्
सिद्धान्तादुत्तमं कौलं कौलात्परतरं नहि ॥

इति । यद्वा विशिष्टानुत्तरत्रिकाम्नायोक्ताचारवद्भिः शाम्भवशाक्ताणवोपायैः सुलभा । अथ च विज्ञानप्रधानो नय आगमो विज्ञानभैरवादिस्तदुक्तोपायैः सुप्रापा । तदुक्तं तत्र—

देवदेव ! त्रिशूलाङ्क ! कपालकृतभूषण ! ।
दिग्देशकालशून्या च व्यपदेशविवर्जिता ॥
यावस्था भरिताकारा भैरवस्योपलभ्यते ।
कैरुपायैर्मुखं तस्य परादेवी कथं भवेत् ॥
यथा सम्यगहं वेद्मि तथा मे ब्रूहि भैरव ! । (वि.भै.,श्लो.२२-२३)

इति देव्या पृष्टे भैरव उवाच—
ऊर्ध्वे प्राणो ह्यधो जीवो विसर्गात्मा परोच्चरेत् ।
उत्पत्तिद्वितयस्थाने भरणाद् भरिता स्थितिः ॥ (वि. भै., श्लो. २४)

इत्यादि । तथा वेदानां वेदोपलक्षितानामुपनिषदाद्यरहस्याम्नायानां गुलिका सारप्राया तत्प्रतिपाद्यत्वात् तत्राप्युमा नाम्नी हैमवती ब्रह्मविद्या सारतरेत्यर्थः । तथा–शिवोऽज्ञो बालिश इव यस्याः सा, शक्तिं विना तस्य जगत्सृष्ट्यादिकार्येऽक्षमत्वेनाज्ञकल्पत्वात् । अज्ञसादृश्याद्वा जगत्यप्रतीतेः । तदुक्तम्—

शक्त्या विना शिवे सूक्ष्मे नाम धाम न विद्यते ।

CC-0 Kashmir Research Institute. Digitized by eGangotri

इति । प्रागप्युक्तं—

"*शम्भुं क एव बुबुधे गिरिराजकन्ये ! ॥"

इति । अथापि शिवाप्रतिहताज्ञा शिवविषया वा शासनात्मकंस्वातन्त्र्यं यस्याः,

भीषास्माद्वातः पवते भीषोदेति सूर्यः ।

भीषादग्निश्च वायुश्च मृत्युर्धावति पञ्चमः ॥ (तैत्ति.२-८नृ.पू.२-१०)

इति । "महद्भयं वज्रमुद्यतमिति" श्रुतेः कठो० ६–२ । आचार्यपादैरपि—

जगत् सूते धाता हरिरवति रुद्रःक्षपयति

तिरस्कुर्वन्नेतत् स्वमपि वपुरीशः स्थगयति ।

सदापूर्वः सर्वं तदिदमनुगृह्णाति च शिवस्-

तवाज्ञामालम्ब्य क्षणचलितयोर्भ्रूलतिकयोः ॥ (आ. ल. श्लो. २४)

इति । शाम्भवदीपिकायामपि—

सृष्टिस्थित्युपसंहारपिधानानुग्रहात्मकम् ।

कृत्यं पञ्चविधं यस्मात्तं नुमः शाश्वतं शिवम् ॥

अथ च शिवस्याज्ञा कल्याणकारिणी वेदात्मिका चतुर्वर्गप्राप्तिसाधनत्वात् । तदुक्तम्—'सर्वानुलङ्घ्यशासनेति'यद्वा वेदान्तर्गतविधिनिषेधात्मिका लिङादिवाच्या या शब्दभावनेतिमीमांसकाः प्राहुः । कौर्मेऽपि हिमवन्तं प्रति देवीवाक्यम्—

ममैवाज्ञा पराशक्तिर्वेदसंज्ञापुरातनी ।

ऋग्यजुःसामरूपेण सर्गादौ सम्प्रवर्तते ॥

इति । चतुःशत्यामपि—

चतुराज्ञाकोशभूतां नौमि श्रीत्रिपुरामहम् ।

इति । तत्रैव वर्णाश्रमधर्माणां विहिताचरणनिषिद्धाचरणयोः फलानामपि व्य-

---

*पञ्चस्तव्या अम्बास्तवस्याष्टमश्लोकान्तवाक्यमिदम् ।

CC-0 Kashmir Research Institute. Digitized by eGangotri

वस्थापितत्वात् । यथा—

येन कुर्वन्ति तद्धर्मं तदर्थं ब्राह्मणा कृताः ।
निरयास्तेषु शमनः पातयेत्तान् मदाज्ञया ॥
धर्मं कुर्वन्ति वेदोक्तं ये मद्भक्तिपरायणाः ।
स्वर्गादिषु शचीशाद्यास्तान्नयन्ति मदाज्ञया ॥

इति । एवमशेषागमजातं भगवत्या आज्ञैवेत्यवसेयम् यद्वा शिवस्य स्वच्छन्द-भट्टारकस्याज्ञा तन्मुखोद्भूता शैवागमात्मिका । ते चागमाः पञ्चस्रोतोरूपाः कामिकादयोऽष्टाविंशतिः । तदुक्तम्—

सद्योजातमुखाज्जाताः पञ्चाद्याः कामिकादयः ।
वामदेवमुखाज्जाता दीप्ताद्याः पञ्च संहिताः ॥
अघोरवक्त्रात्सञ्जाताः पञ्चाप्तिविजयादयः ।
पुंवक्त्रादपि संभूताः पञ्च वैरोचनादयः ॥
ईशानवदनाज्जाताः प्रोद्गीताद्यष्टसंहिताः ।
ऊर्ध्वस्रोतोभवा एते नाभ्यधःस्रोतसः परे ॥

इति । लैङ्गेऽपि—

पुराममाज्ञामद्वक्त्रात्समुत्पन्ना सरस्वती* ।
पञ्चवक्त्रा महाभागा जगतामभयप्रदा ॥ (अ. ८७ श्लो. ९)

इति । अपिच शिवस्याज्ञा रहस्यविद्यारूपा । तदुक्तं गन्धर्वे—

सैषाज्ञा परमा शैवी कथिता तव पार्वति ! ।
वेदादिसकलाविद्या वेश्या इव प्रकाशिताः ॥
सर्वेषु दर्शनेष्वेव विद्येयं खलु गोपिता । (प. २७. श्लो. ४६–४७)

---

*सनातनी इति पाठान्तरम् उपलभ्यते ।

CC-0 Kashmir Research Institute. Digitized by eGangotri

इति । शिवपुराणेऽपि—

रुद्राज्ञैषा स्थितादेवी अनया मुक्तिरम्बया इति। अथ च शिवरूपस्य गुरोराज्ञा आज्ञासंक्रमणनामकं कृत्यं तच्च साधके स्वयमेव देवी गुरुमूर्तिस्था करोति। श्रीगुरुः शिष्यदृष्ट्यन्तः स्वदृष्ट्या पश्यन् योगमहिम्ना स्वनेत्रद्वारा निर्गत्य तन्नेत्रेणान्तः प्रविश्य तच्चैतन्यमिलितः शिष्यस्य मनो वेधयेदिति।

तदिदमाज्ञासंक्रमणनामकं रहस्यं कृत्यं श्रीगुरुमुखैकगम्यं येन साधकस्य सर्वत्राप्रतिहताज्ञा सम्पद्यते तदुक्तं ज्ञानार्णवे दीक्षापटले—

दृष्ट्यावलोकयेत्तं तु दृष्ट्या दृष्टिं प्रमेलयेत्।
आज्ञासंक्रमणं कुर्याद्यावन्निश्चलता भवेत्॥ (प. २४ श्लो. २०–२१)

इति। चतुःशत्यामपि—

यदैव जपते विद्यां महात्रिपुरसुन्दरीम्।
तदैव मातृचक्राज्ञा संक्रामत्यस्य विग्रहे॥
सर्वासां सर्वसंस्थानां योगिनीनां भवेत्प्रियः।
पुत्रवत्परमेशानि ! ध्यानादेव हि साधकः॥

इति। आज्ञाकलेति केचित्। मन्त्रसिद्धिरित्यन्ये। अथ च शिवाया-भगवत्या आज्ञा धर्मशास्त्रादिकं तद्रूपा। तदुक्तं कौर्मे भगवत्यैव—

अष्टादशपुराणानि व्यासेन कथितानि तु।
नियोगाद् ब्रह्मणो राजंस्तेषु धर्मः प्रतिष्ठितः॥
अन्यान्युपपुराणानि तच्छिष्यैर्व्याकृतानि तु।
युगे युगे तु सर्वेषां कर्ता वै धर्मशास्त्रवित्॥
शिक्षा कल्पो व्याकरणं निरुक्तं छन्द एव च।
ज्योतिःशास्त्रं न्यायविद्या सर्वेषामुपबृंहणम्॥

CC-0 Kashmir Research Institute. Digitized by eGangotri

एवं चतुर्दशैतानि विद्यास्थानानि सत्तम ! ।
चतुर्वेदैः सहोत्थानि धर्मो नान्यत्र विद्यते ॥
एवं पैतामहं धर्मं मनुव्यासादयः परम् ।
स्थापयन्ति ममादेशाद्यावदाभूतसंप्लवम् ॥

इति ।

अथ च शिवाभ्यो वाग्देवताशक्तिभ्य आज्ञा नाममन्त्रपारायणगर्भस्तोत्रकरणात्मिका यस्याः सा, अन्यासां तादृशस्तोत्रकरणेऽज्ञत्वेनाधिकाराभावात् । तदुक्तं ब्रह्माण्डपुराणे—

पुराश्री ललितादेवी भक्तानां हितकाम्यया ।
वाग्देवीर्वशिनी मुख्या समाहूयेदमब्रवीत् ॥
वाग्देवता वशिन्याद्याः ! शृणुध्वं वचनं मम ।
भवत्यो मत्प्रसादेन प्रोल्लसद्वाग्विभूतयः ॥
मद्भक्तानां वाग्विभूतिप्रदाने विनियोजिताः ।
मच्चक्रस्य रहस्यज्ञाः मम नामपरायणाः ॥
ममस्तोत्रविधानाय तस्मादाज्ञापयामि वः ।
कुरुध्वमङ्कितं स्तोत्रं मम नामसहस्रकैः ॥

इत्यादि । तथा—शीले स्वभावे स्वातन्त्र्याख्ये महिमनि तिष्ठतीति शीलस्था स्वस्वभावादप्रच्युता "स भगवः कस्मिन् प्रतिष्ठितः स्वेमहिम्नीति होवाचेति" श्रुतेः । यद्वा कामेश्वरैकात्म्येन स्फुरणादनन्यमुखप्रेक्षित्वलक्षणपातिव्रत्याख्यसद्व्रतस्था "प्रपञ्चोपशमं शिवं शान्तं चतुर्थं मन्यन्ते स आत्मा स विज्ञेयः" इति श्रुतिसिद्धं शिवं सच्चिदानन्दलक्षणं पदं धाम तुरीयं तस्य वदन्या दात्री । तीव्रतरशक्तिपातपूतहृदयानां हि साधकाग्र्याणां विद्यासमुल्लासात् परमशिवावस्था सञ्जायत इत्यर्थः । श्रुतिः—

CC-0 Kashmir Research Institute. Digitized by eGangotri

"ब्रह्म वेद ब्रह्मैवभवति । यो वेद निहितं गुहायां परमे व्योमन्निति च"
तथा च शिवसूत्रम्—

'विद्यासमुत्थाने स्वाभाविकीखेचरीमुद्रा शिवास्थेति' । (२–५)

विवृतं चैतत्—

विद्यायाः प्राक् समाख्यातरूपायाः शङ्करेच्छया ।
स्वाभाविके समुत्थाने समुल्लासे स्वभावजे ॥
अवस्था या शिवस्यान्तरवस्थातुरभेदिनी ।
स्फुरत्तामेव सम्पूर्णस्वानन्दोच्छलनात्मिकाम् ॥
मुदं रातीत्यतो मुद्रा खेचरी चिन्नभश्चरी ।
व्यज्यते चिन्नभस्यास्था विश्वोत्तीर्णस्वरूपिणी ॥

इति । शक्तिसूत्रेऽपि--'निजसंविद्देवताचक्रेश्वरत्वप्राप्तिरिति' । 'शुद्धविद्योदयाच्चक्रेशत्वसिद्धिरिति(३-२१)शिवसूत्रेऽप्यस्यैवार्थस्य प्रतिपादितत्वात् । यद्वा शिवे चिद्भैरवाकाशे पदमवस्थानमस्याः सा चासौ वदन्या महती देशकालाद्यनवच्छिन्ना शिवानन्यस्वरूपा तत्समवेतशक्तिरित्यर्थः । तदुक्तं--महारामायणे वासिष्ठे—

स भैरवश्चिदाकाशः शिव इत्यभिधीयते ।
अनन्यां तस्य तां विद्धि स्पन्दशक्तिं मनोमयीम् ॥

इति । तथा च सौरसंहितायाम्—

ब्रह्मणोऽभिन्नशक्तिस्तु ब्रह्मैव खलु नापरा ।
तथासति वृथा प्रोक्तं शक्तिरित्यविवेकिभिः ॥
शक्तिशक्तिमतोर्विद्वन् भेदाभेदस्तु दुर्घटः ।

इति । तथा--शिवानामैहिकामुष्मिकक्षेमाणां निधिः कोषरूपा सर्वसुखदात्रीत्यर्थः । यद्वा शिवस्य श्रेयोरूपमोक्षस्य स्वशक्तिविकासात्मकस्य

CC-0 Kashmir Research Institute. Digitized by eGangotri

निधिराश्रयः, न च मुक्तिरन्यत्रकुत्रचिद्गत्यादि । तदुक्तं परमार्थसारे—

मोक्षस्य नैव किञ्चिद्धामास्ति न चापि गमनमन्यत्र ।
अज्ञानग्रन्थिभिदा स्वशक्त्यभिव्यक्तता मोक्षः ॥ (श्लो. ६०)

इति । यद्वा शिवानां वेदानां शिवस्य तुरीयचिद्रसस्य वा निधिः कोशः । "यस्य निःश्वसितं वेदा" इतिश्रुतेः "रसो वै सः, रसं ह्येवायं लब्ध्वानन्दी-भवतीति श्रुतेश्च तैत्ति. २-७ । ब्रह्माण्डपुराणेऽपि—

रस एव परं ब्रह्म रस एव परागतिः ।
रसो हि कान्तिदः पुसां रसो रेत इतिस्मृतः ॥
रसो वै रससंलब्ध्या ह्यानन्दी सम्भवत्यपि ।
वेदप्रामाण्यसंसिद्ध्या रसः प्राणतया स्थितः ॥
को ह्येवान्याच्च कः प्राण्यादित्यपि श्रुतिभाषितः ।
प्राणात्मको रसः प्रोक्तः प्राणदः कुम्भसम्भव ! ॥

इति । तथा शिवः कामेश्वराख्योऽस्त्यस्याः पतित्वेनेति शिवा । शिव-मस्या अस्तीति वा, अर्शाद्यचि टाप् । यद्वा शिवा शिवदूती नित्या स्वरूपा । अथ च––

चिन्मात्रश्रयमायायाः शक्त्याकारे द्विजोत्तमाः ! ।
अनुप्रविष्टा या संविन्निर्विकल्पा स्वयंप्रभा ॥
सदाकारा परानन्दा संसारोच्छेदकारिणी ।
सा शिवा परमादेवी शिवाभिन्ना शिवङ्करी ॥

इति । यज्ञवैभवखण्डोक्तलक्षणा । अथवा शिवं मोक्षं ददातीति शिवा । तदुक्तं देवीपुराणे––

शिवा मुक्तिः समाख्याता योगिनां मोक्षदायिनी ।

CC-0 Kashmir Research Institute. Digitized by eGangotri

शिवाय जयते देवी ततो लोके शिवा स्मृता ॥

इति । आगमे तु—

पावकस्योष्णतेवेयं भास्कस्येव दीधितिः ।

चन्द्रस्य चन्द्रिकेवेयं शिवस्य सहजा शिवा ॥

इति । यद्वा स्वोपासकानविद्यापाशनिरासेन शिवयति स्वच्छस्वतन्त्र-महाप्रकाशसंविन्मयान् करोतीति शिवा, तत्करोतीतिरयन्तात्पचाद्यच् तदुक्तम्-

महाप्रकाशरूपा हि येयं संविद्विजृम्भते ।

स शिवः शिवतैवास्य वैश्वरूप्यावभासिता ॥

इति । अथवा स्वभक्तानां शिवं भोगापवर्गलक्षणं भद्रं करोतीति वा । ब्रह्माण्डपुराणे—

येऽर्चयन्ति पराशक्तिं विधिनाविधिनापि वा ।

न ते संसारिणो नूनं मुक्ता एव न संशयः ॥

तस्मादशेषवर्णानां त्रिपुराराधनं विना ।

न स्तो भोगापवर्गौ तु यौगपद्येन कुत्रचित् ॥

इति । तथा—मिमीते इतिमाता ब्रह्मादिस्तम्बपर्यन्तजडाजडभूता-नामुत्पादिका, "इतो वा इमानि भूतानि जायन्ते" इति श्रुतेः "जन्माद्यस्य यतः" १-१-२-२ इति ब्रह्मसूत्राच्च । यद्वा हसकलरडेति व्यञ्जनसमुदायस्य त्रिधा बालास्वरत्रयेणान्ते योजनात् कूटत्रयात्मको मन्त्रो जायते स मातृशब्दे-नाभिधीयते । तेन तन्मन्त्राधिष्ठातृदेवतारूपा वाच्यवाचकयोरभेदोपचारात् ।

अत्र पञ्चदशभिर्विद्ये इत्यादिपदैः श्री पञ्चदशाक्षरीमनोरुद्धारः सद्गुरु-प्रसादावगतो मनागुन्मील्यते । तत्र विधिपदेन ब्रह्मवाचकत्वेन तद्बीजं ककारो लक्ष्यते । तदुक्तम्—

ककारो मदनो ब्रह्मा क्रोधेशःकुलमालिनी ।

CC-0 Kashmir Research Institute. Digitized by eGangotri

इति ।

विद्यापदेन तदधिष्ठातृवाग्वाचकेनैकारो गृह्यते तदुक्तम्—"एकारो वाग्भवः शक्तिरिति" वेद्यशब्देन स्वाभेदभावनयाऽवश्यज्ञेयकामकलावाचकेन तद्बीजं चतुर्थस्वरो लक्ष्यते । विविधा नानाजातयो गन्धर्वकिन्नरादयो देवाः समया अन्तिके यस्य सेन्द्रस्तेन तद्बीजं लकारोऽभिधीयते । वेदजननीति शब्देन त्रिषु कूटेषु साधारणतया हल्लेखा गृह्यते । इति कामराजविद्यायाः प्रथमकूटोद्धारः सूचितः । तथा विचित्रपदेन विलीनचित्राकारतया शून्यवाचकेन व्योमवर्णो हकार उच्यते । विश्वाद्यपदेन जगद्बीजवाचिना "जगद्बीजं शक्तिनामा सोऽहंवेगवती भृगु"रिति नन्दनोक्तेः सकारोद्धारः । विगतो नयः सदाचारो यस्य स कामो मुनीनामपि मनो मोहनात्तेन कामबीजं ककारोऽभिधीयते । वेदपदेन चतुःसंख्याभिधीयते तेन चत्वारि भूतानि गुलिकेव यस्यां सन्ति सा द्यौः तेनाकाशबीजस्य हकारस्योद्धारः—

'गुणाः पञ्चदशाख्याता भूतानां तन्मयी शिवा' ।

इत्युक्तेरत्यन्तजाड्यमापन्नाया गन्धतन्मात्रगुणायाः पृथिव्याः स्वरूपेण परिणतत्वाच्छिवाज्ञापदेन पृथिवीबीजं लकारउद्धृतः । शीलस्थेतिपदेन पराशक्तिस्वभावार्थतया पुनरपि मध्यमकूटान्तभागस्था हल्लेखाभिधीयत इति द्वितीयकूटोद्धारः । तथा शिवः पद्यते गम्यतेऽनेनेति शिवपदं "शैवीमुखमिहोच्यते" (वि.भै.श्लो.२०) इत्युक्त्या शक्तिरुच्यते । तेन सकारउद्धृतः ! शिवनिधे इतिपदेन कामानन्दाश्रयत्वेन स्मरवाचिना तद्बीजं ककारोऽभिधीयते । शिवानि मङ्गलानि वसूनि यस्यां सन्ति सा शिवा वसुधा, तेन लकारोद्धारः । मातृपदेन कूटान्तभागरूपा पुनर्देवीवाचका हल्लेखोद्धृता । इति तृतीयकूटोद्धारः ।

एवमस्या राजविद्याया यद्यपि चतुःशत्याद्यागमेषु षड्विधो भावाद्यर्थः

CC-0 Kashmir Research Institute. Digitized by eGangotri

सुप्रसिद्धतयाभिहितस्तदर्थकथनस्य पौनरुक्त्यप्रसङ्गात् तथापि साधकप्रवर्याणां मनःसन्तुष्टयेऽनुत्तरत्रिकशासननयेनातिसंक्षिप्ततया मनाक् तदर्थः सद्गुरुसम्प्रदायाधिगतः प्रोन्मील्यते । यथा—इह खलु निराभासानुत्तरस्वच्छन्दभैरवीयचिदाकाशात्मकं किमप्यस्पन्दं तत्त्वं स्वेच्छया स्वात्मनि चिदब्धावानन्दादिशक्तिस्फारोर्मिप्रसरविचिकासयिषोन्मुख्यं किञ्चिच्चलत्तात्मकमाद्यं स्पन्दमभ्युपगच्छति, तदेवोपशान्ताशेषवेद्यमभ्युपगमरूपं ब्रह्मतत्त्वं कामेश्वरसंज्ञकमोङ्कारार्णेनोच्यते । तस्यैव "तदैक्षते"तिश्रुत्या छा. ६–२–३ ईक्षणात्मपूर्णविमर्शक्रियोपारूढौ विश्वबीजात्मकशाक्तवीर्योच्छूनावस्था शक्तितत्त्वाख्या कामेश्वरी कवर्णेनाभिधीयते तत्रैष्टव्याद्यनारूषणेन शुद्धेच्छाज्ञानक्रियाशक्तीनां प्रकाशानन्दसाराणां या घनीभूतावस्था सैव शक्तित्रयात्मकत्रिकोणरूपस्यैकारवाच्यतां भजते । तत्रैव योनिरूपे त्रिकोणे ।

> मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम् ।
> सम्भवः सर्वभूतानां ततो भवति भारत ! ॥ (भ. गी. १४-३)

इति स्थित्यानन्तैषणीयज्ञेयकार्यविषयकमीशनाख्यमैश्वर्यमहमिदमिति सदाशिवादिदशोचितवीर्याधानमीकारवाच्यमस्ति । तेनैश्वर्येण समनन्तरमेव "सर्वो ममायं विभवः" इति स्वाभेदविमर्शनयुक्त्या शुद्धाध्वदशोचितया परमैश्वर्यवत्त्वं लकारवाच्यतया भवति एवमियति विजृम्भमाणे शुद्धाध्वसर्गे एकैव विकसिता पराविमर्शशक्तिर्महामाया हृल्लेखारूपा कामेश्वरी हकारांशेन परमाकाशधिशायितां रेफांशेन परतेजोमयतामीकारांशेन सर्वज्ञकर्तृत्वाद्यैश्वर्यमर्धचन्द्रांशेनाशेषयोन्याधारतां बिन्द्वंशेनाविभेदवेदनरूपतां स्वात्मनि वेदयतीति प्रथमकूटस्यार्थः । असावेव कामेश्वरो यदा स्वस्वातन्त्र्यकलया स्वं महिमानं विस्मार्य कोशकारकृमिवद्बद्धात्मभावेन सङ्कुचितप्रमातृभूमिकां नटवदवभासयति, तदा प्राक्संवित्प्राणे परिणता इत्युक्तेः, "स प्राणमसृजत" इति श्रुतेश्च, प्राणाश्रय-

CC-0 Kashmir Research Institute. Digitized by eGangotri

वशेन देहपुर्यष्टकानुप्रवेशात् हसेतिवर्णाभ्यां हंसजपविधानादाणवदशावलम्बितोऽणुरित्युच्यते। यदुक्तं–'शिव एव गृहीतपशुभावः' इति। तत्र—

ऊर्ध्वं प्राणमुन्नयत्यपानं प्रत्यगस्यति।
मध्ये वामनमासीनं विश्वे देवा उपासते॥

इति। श्रुत्या निःश्वासोच्छ्वासावन्तरेण चोदकमनुपपन्नौ, अतस्तच्चोदकोऽनाहतभट्टारकोऽन्तर्यामी ककारवाच्यः प्राणात्मा स्वीक्रियते। तद्भावापत्तौ हकारवाच्यमनाहतध्वनिरूपत्वं भवति। एवं प्राणाद्यभिमानित्वेन व्यवहरन्नाणवादिमलावृतः संसारे परिवर्तमानोऽत्यर्थं जडभावापादयित्र्या तिरोधानशक्त्या लकारवाच्यं पाशवजाड्यमिवापाद्यते परमार्थस्वस्वभावाप्रत्यभिज्ञानात्, एतावत्पर्यन्तं प्राणादिदशोद्भावनपूर्वकपरिमितप्रमातृभावग्रहणरूपेण सैव कामेश्वरी भगवती परिणम्य तत्तद्रूपतयाक्रीडते इति कूटान्तहृल्लेखया वेद्यते इति द्वितीयकूटस्यार्थः।

एवं स्वेच्छया गृहीतपशुभावः स एव कामेश्वरः पुनरपि स्वस्वरूपप्रथनकारिण्या स्वयैवानुग्रहशक्त्या सद्देशिकसच्छासनविचारणद्वारा शाम्भवशाक्ताणवोपायपरिशीलनतः "सिद्धः स्वतन्त्रभावः" (शि. सू. २-३) इति स्थित्या प्रत्यभिज्ञातस्वैश्वर्यः सन् "भूयःस्यात् प्रतिमीलन"मिति (शि. सू. ३-४५) शिवसूत्रोक्तनीत्या नैसर्गिकीं स्वस्वभावापत्तिं प्रत्यापद्यते। येनाप्रतिहतस्वातन्त्र्याद्यामलसिद्धिभाग्भवति उपासकजन इत्याशयेनान्त्यकूटं विन्नियते।

स इति स्वेच्छया गृहीतप्राणपुर्यष्टकभूमिकः प्रमाता क इति पुनरपि स्वेच्छयैवोक्तविद्योपासनया ल इति पूर्णैश्वर्यवान् कामेश्वराख्यः शिवः सम्पद्यते। यदुक्तं स्पन्दे—

यदात्वेकत्रसंरूढस्तदा तस्य लयोद्भवौ।

CC-0 Kashmir Research Institute. Digitized by eGangotri

नियच्छन् भोक्तृतामेति ततश्चक्रेश्वरोभवेत् ॥ (३ नि. श्लो. १९)

इति। श्रीतन्त्रालोकेऽपि—

देवःस्वतन्त्रश्चिद्रूपः प्रकाशात्मा स्वभावतः ।
रूपप्रच्छादनक्रीडायोगादणुरनेककः ॥
स स्वयं कल्पिताकारविकल्पात्मककर्मभिः ।
बध्नात्यात्मानमेवेह स्वातन्त्र्यादिति वर्णितम् ॥
स्वातन्त्र्यमहिमैवायं देवस्य यदसौ पुनः ।
स्वंरूपं परिशुद्धं सत् स्पृशत्यप्यणुतामयः ॥ (त. आ. १३ आ. श्लो. १०३–१०५)

इति। एवं परमशिवीभावसामरस्यात्मा मोक्षावस्थानुग्रहैकपरया कामेश्वर्यैव स्वोपासकाय वितीर्यते इति हृल्लेखयान्त्ययाभिहितं भवति। अस्या एव विद्याया मुमुक्षुभिः प्रणवादित्वेनोपास्यत्वात् षोडशार्णवत्वे षोडशी संज्ञा। अत एव प्रणवप्रमुखमर्थः संक्षेपाद्विवृतः। विस्तरस्तूपाध्यायमहामाहेश्वरशिवरामकृतौ श्रीविद्याविवरणे द्रष्टव्य इति ॥२१॥

नन्वलं मद्भक्तिप्रार्थनयान्यःकश्चिदाश्रीयतामित्याशङ्क्य तत्र प्राधान्येन परमशिवस्यापि त्वत्पारवश्यात्तद्भक्तिरप्यसारप्रायेत्याशयेनाह—

**विधेर्मुण्डं हृत्वा यदकुरुत पात्रं करतले**
**हरिं शूलप्रोतं यदगमयदंसाभरणताम् ।**
**अलञ्चक्रे कण्ठं यदपि गरलेनाम्ब ! गिरिशः**
**शिवस्थायाः शक्तेस्तदिदमखिलं ते विलसितम् ॥२२॥**

हे अम्ब ! गिरिः कैलासाद्रिराश्रयत्वेनास्यास्ति गिरिशः शिवो (लोमादित्वाच्छः) विधेर्ब्रह्मणो मुण्डं पञ्चमंशिरोऽपभाषणदूषितत्वाद्धृत्वा छित्त्वा यत्कर-

CC-0 Kashmir Research Institute. Digitized by eGangotri

तले स्वकीयेपाणौ पात्रं कपालमकुरुत व्यधत्त, पाणौ भिक्षापात्रमधारयदित्यर्थः। यश्च हरिं स्वभक्तश्वेतनिग्रहणोद्यतं यमं शूलें त्रिशूलायुधे प्रोतं स्यूतमंसयोः स्कन्धयोराभरणतामलङ्कारभावमगमयदनैषीत्। तथा देवासुरैर्मथ्यमाने क्षीराब्धौ चतुर्दशसु रत्नेषूद्गतेषु तदन्यतमेन कालकूटाख्यविषेण जाज्वल्यमानेन दह्यमानायां त्रिलोक्यां ब्रह्मादिप्रार्थनया शिवः तद्विषं ग्रसित्वा कण्ठेऽस्थापयदितिवृत्तं शिवपुराणादौ ख्यातम्। तदेतदाह-यदपि गरलेन क्षीराब्धिमथनोद्गतेन कालकूटविषेण कण्ठं स्वकीयमलञ्चक्रे भूषयामास। सर्वश्वेतस्य तस्य कण्ठैकदेशेऽसिततिलकच्छाययातिशयशोभाधायित्वात् भूषणत्वमेव न तद् दूषणमित्यनेन द्योतितम्। तदिदमशेषमुक्तचरितं शिवस्थायाः शिवसमवेतायास्ते तव शक्तेर्विलसितं विजृम्भितम्। शक्त्या विना वस्तुतः शिवस्य स्पन्दमात्रमपि कर्तुमसामर्थ्यात् किमु तादृक् अत्यद्भुतचरितं। तदुक्तमाचार्यपादैः—

करालं यत्क्ष्वेडं कवलितवतः कालकलना।
न शम्भोस्तन्मूलं तव जननि ! ताटङ्कमहिमा॥ (आ. ल. श्लो. २७)

इति।

सनत्कुमारसंहितायाम्—

मथ्यमानेऽमृते पूर्वं क्षीरोदे: सुरदानवैः।
अग्रे समुत्थितं तस्माद्विषं कालानलप्रभम्॥
तद्दृष्ट्वा सुरसंघाश्च दैत्याश्चैव वरानने !।
विषण्णवदनाः सर्वे गतास्ते ब्रह्मणोऽन्तिकम्॥

इत्यारभ्य ससुरासुरो ब्रह्मा तद्वेगामर्षणः शिवं शरणं गतः प्रार्थनांचक्रे यथा—

तत्पिबस्व महादेव ! लोकानां हितकाम्यया।
भवानग्रश्च भोक्ता वै भवान् देववरः प्रभो !॥
भवांस्तस्य महावेगं समर्थः सन्नियच्छितुम्,

CC-0 Kashmir Research Institute. Digitized by eGangotri

नहि कश्चित्पुमाञ्छक्तस्त्रिषु लोकेषु विद्यते ॥
येनाभ्युद्गतमात्रेण कृतः कृष्णो जनार्दनः ।
ब्रुवतस्तु वरारोहे ! ब्रह्मणः परमेष्ठिनः ॥
बाढमित्येव तद्वाक्यं प्रतिगृह्य वरानने ! ।
ततोऽहं पातुमारब्धो विषमन्तकसन्निभम् ॥
पीतं च महाघोरं विषं सुरगणार्दनम् ।

इति । वायुपुराणेऽपि—
पश्यतां सर्वदेवानां पिशाचोरगरक्षसाम् ।
धृतं कण्ठे विषं घोरं नीलकण्ठस्ततोऽस्म्यहम् ॥

इति । मूलदेवतास्तुतावपि—
हन्तुः पुरामधिगलं परिपूर्यमाणः
क्रूरः कथं नु भविता गरलस्य वेगः ।
आश्वासनाय किल मातरिदं तवार्ध-
देहस्य शश्वदमृताप्लुतिशीतलस्य ॥

इति ।

अभियुक्तानामत्रायं विवेकः । नच परशिव एव सशक्तिकप्रपञ्चकारण-तयाभ्युपगम्यमानः सर्वं कर्तुं शक्नुयात् किं शक्तिकल्पनयेति वाच्यं, 'तस्यां परिणतायां तु न कश्चित्पर इष्यते ।' इति चतुःशत्युक्तस्थित्या शक्तिपरिणाम-कल्पनमावश्यकं तत एव युक्तेः परशिवकल्पनमेव वैयर्थ्यान्नैष्टव्यम् । पक्षद्वयेऽपि प्रपञ्चोपादानं परिणामीत्युक्तम् । तत्रौपनिषदां पक्षे परस्यचिद्रूपस्य ब्रह्मणः शक्तिर्मायाख्या, सा च जडैव, सैव च जगतः परिणाम्युपादानम्, परं ब्रह्म तु विवर्तोपादानमत एव प्रपञ्चस्यापि मायिकत्वाज्जडत्वं मिथ्यात्वं च । अद्वैतश्रुती-नां तु पारमार्थिकव्यक्तिरेकैवेति तात्पर्यात् । सर्वंब्रह्मेति सामानाधिकरण्यस्य तु

CC-0 Kashmir Research Institute. Digitized by eGangotri

बाधायां तात्पर्यादित्यादि । तान्त्रिकाणां पक्षे तु परचिन्निष्ठा या चिच्छक्तिरौपनिषदानामपि संमता सैवानन्तरूपत्वान्मायेत्युच्यते । 'परास्यशक्तिर्विविधैव श्रूयते' इति, माया चाविद्या च स्वयमेव भवतीत्यादिश्रुतेश्च प्रपञ्चस्य तत्परिणामरूपत्वात् चिद्रूपत्वं सत्यत्वञ्च । चिद्विलासः प्रपञ्चोऽयमिति वासिष्ठोक्तेः । सर्वं ब्रह्मेति सामानाधिकरण्यस्यात्यन्ताभेदे एव स्वारस्यात् । विरोधापादकस्यैकस्य भेदस्यैव मिथ्यात्वाङ्गीकारादद्वैतश्रुतीनां विरोधभाव इत्यादि । अस्मिन्नेवर्थे प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् । आत्मकृतेः परिणामात् । तदनन्यत्वमारम्भणशब्दादिभ्यः, इत्यादिवैयासिकसूत्राणामपि स्वारस्यं स्पष्टमेव । एवं पक्षद्वयेऽपि प्रपञ्चकारणतया शक्तेरावश्यकत्वे परशिव एवान्तर्गडुत्वान्नौपनिषदैः कल्प्यः । नहि घटं प्रति परिणामिमृत्तिकापेक्षया विवर्तरूपं किञ्चित्कारणान्तरमुपलभामहे । अत एवैकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय यथा सौम्यैकेन मृत्पिण्डेन विज्ञातेनेति दृष्टान्तप्रदर्शनं श्रुतिषूपलभ्यते । एवं शक्तिसाहित्ये शिवस्य कार्यक्षमत्वमन्यथा तदभावः । अतएव तस्य पारतन्त्र्यं, नैव शिवसाहित्ये शक्तेरन्वयव्यतिरेकौ संभवतस्तस्याः स्वतन्त्रत्वात् । तदुक्तम्चितिःस्वतन्त्राः विश्वसिद्धिहेतुरिति (प्र. हृ. सू. १) परापेक्षा मन्दा । तदुक्तम्—

परोहि शक्तिरहितः शक्तःकर्तुं न किञ्चन ।
शक्तस्तु परमेशानि ! शक्त्या युक्तो यदा भवेत् ॥

इत्यास्तामेतत् ॥२२॥

एवमन्यदेवताभक्तेरप्युपेक्षां कटाक्षयंस्तत्तद्रूपव्यापारवैचित्र्येण देव्या एव लीलाविलसितमित्याह—

**विरिञ्च्याख्या मातः ! सृजसि हरिसंज्ञा त्वमवसि**

CC-0 Kashmir Research Institute. Digitized by eGangotri

त्रिलोकीं रुद्राख्या हरसि *विदधासीश्वरदशाम् ।
भवन्ती सादाख्या† शिवयसि च पाशौघदलिनी
त्वमेवैकानेका भवसि कृतिभेदैर्गिरिसुते ! ।।२३।।

हे मातर्जननि ! इतिप्राक् विवृतम् । त्वं विरिञ्च्याख्या ब्रह्मसंज्ञा सृष्टिरूपकृत्यधिष्ठात्री भवन्तीति सर्वत्र योज्यं त्रिलोकीं भूर्भुवःस्वर्लक्षणांभवाभवादिलक्षणां वा सृजसि‡ । हरिसंज्ञा विष्णुनाम्नी स्थितिरूपकृत्यधिष्ठात्र्यवसि¶ रक्षसि रुद्राख्या संहृत्यधिष्ठात्री हरसि संहारं करोषि§ । तिरोधानाधिष्ठात्री भूत्वा ईश्वरदशां विदधासि त्रिलोकीं पिधत्से इत्यर्थः ।

सादाख्या च सदाशिवसंज्ञा भवन्ती अनुग्रहैकमयी पाशानां मलमायाकर्माख्यानामोघः समुदायः प्रसरश्च तस्य दलिनी विदारयन्ती त्रिलोकीं शिवयसि प्रकाशानन्दघनशिवैकात्मभावमानयसीत्यर्थः । "सदेवसौम्येदमग्र आसीदिति ऐतदात्म्यमिदं सर्वमि"त्यादिश्रुतेः । हेगिरिसुते ! पर्वतराजपुत्रि ! इत्थं त्वमेकैव सामान्यस्पन्दात्मा सती कृतिभेदैःसृष्टिस्थितिसंहारविलयानुग्रहात्मकैः कार्यपञ्चकप्रकारैरनेका विशेषस्पन्दात्मकब्रह्मविष्णवादिसंज्ञका भवसि । अत एव वस्तुतो ब्रह्मादिसदाशिवान्तानां पञ्चानां कारणब्रह्मणां शक्तिवैकल्यात्प्रेतशब्देनागमेषु व्यवहारः । तदुक्तं ज्ञानार्णवे—

ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्चसदाशिवः ।
पञ्चप्रेता वरारोहे ! निश्चला एव ते सदा ॥
ब्रह्मणः परमेशानि ! कर्तृत्वं सृष्टिरूपकम् ।

---

*पिदधासीत्येव शोभनः पाठः प्रतीयते । †नादा' पाठः । ‡'तदैक्षत बहुस्यां प्रजायेयेति तत्तेजोऽसृजतेतिश्रुतेः । ¶'सन्मूलाः सौम्येमाः प्रजा. सदायतनाः सत्प्रतिष्ठाः इतिश्रुतेः । §'तेजः परस्यां देवतायामि'ति श्रुतेः ।

CC-0 Kashmir Research Institute. Digitized by eGangotri

वामा शक्तिस्तु सा ज्ञेया ब्रह्मा प्रेतो न संशयः ॥

शिवस्य करणं नास्ति शक्तेस्तु करणं यतः । (४र्थ. प. श्लो. १४-१६)

इत्यदि ।

सदाशिवो महाप्रेतःकेवलो निश्चलःप्रिये ! ।

शक्त्या विनाकृतो देवि ! कथञ्चिदपि न क्षमः ॥ (४प. २६-२७)

इत्यन्तम् । तत्तद्रूपेणावस्थानं शक्तेरुक्तम् । त्रिपुरासिद्धान्तेऽपि—

निर्विशेषमपि ब्रह्म स्वस्मिन् मायाविलासतः ।

ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः ॥

इत्याख्यावशतः पञ्चब्रह्मरूपेण संस्थितम् ।

इति ।

आचार्योक्तिरपि—

पुंभावलीलापुरुषास्तु पञ्च याद‍ृच्छिकं संलपितं त्रयी ते ।

अम्ब ! त्वदक्ष्णोरणुरंशुमाली तवैव मन्दस्मितबिन्दुरिन्दुः ॥

इति । अथ च हे मातर्विश्वजननि ! त्वं विरिञ्च्याख्या ब्रह्मसंज्ञा सृष्ट्याख्यकृत्यसम्पादनाय ब्रह्माणी शक्तिःसती भूरादिलक्षणां भवाभवादिलक्षणां वा त्रिलोकीं वाच्यवाचकात्मषडध्वरूपां सृजसि, मायाप्रकृत्यादिकारणान्तरनैरपेक्ष्येण स्वस्वातन्त्र्याद् दर्पणनगरवत् स्वात्मन्येव स्वेच्छामात्रेण विभावयसि । 'इतो वा इमानि भूतानि जायन्ते' इतिश्रुतेः । तस्माद्वा एतस्मादाकाशःसंभूत-आकाशाद्वायुर्वायोरग्निरग्नेरापोऽद्भ्यः पृथिवी'ति क्षितितत्त्वपर्यन्तसर्गश्रवणात् तत्रोपादानकारणानपेक्षया विश्वोत्पादे स्वेच्छैवेका जागरूका । तदुक्तं शक्तिसूत्रेषु—

"चितिःस्वतन्त्रा विश्वसिद्धिहेतुः । स्वेच्छयैव स्वभित्तौविश्वमुन्मील-

CC-0 Kashmir Research Institute. Digitized by eGangotri

यति। (प्र. हृ. सू. १-२) इति।

भट्टनारायणोऽप्याह—

निरुपादानसम्भारमभित्तावेव तन्वते।
जगच्चित्रं नमस्तस्मै कलाश्लाध्याय शूलिने॥ (स्त. चि. ९ श्लो.)

इति। अन्यत्रापि—

स्वेच्छयैव जगत्सर्वं निगरत्युद्गिरत्यपि।

इति। तथा—

जगच्चित्रं समालिख्य स्वेच्छातूलिकयात्मनि।
स्वयमेव समालोक्य प्रीणाति परमेश्वरः॥

इति। "बहुस्यां प्रजायेयेति (छां. उ. ६-२-३ तैत्ति. २-६) "तदात्मानं स्वयमकुरुतेति (तैत्ति. २-७)" "एकोवशीसर्वभूतान्तरात्मा एकं रूपं बहुधायः करोति"। (कठो. ५-१२) इत्यादिश्रुतिषु पराभट्टारिकाया मातुरेव परशिवाभिन्नायाः सृष्ट्याख्यकृतिकारित्वप्रसिद्धेः। ब्रह्मणो हि ब्राह्म्या शक्त्यानाविष्टस्याशक्तत्वात्। परमार्थतस्तच्छक्तिरेव तत्कार्यकारिणी ब्रह्मणि तत्कार्योपचारात् तथावभासमान भावजातस्य रक्त्यात्मकस्थितिकृतिनिष्पत्तये हरिसंज्ञा विष्णवभिधाना वैष्णवीशक्तिः सती अवसि रक्षसि दीपयसि वा, स्वाभासारञ्जनमेवात्रावनमिति बोध्यम्। "येन जातानि जीवन्तीति श्रुतेः" (तैत्ति.३-१) प्राग्वद्विष्णा वुपचाराद्रक्षणव्यपदेशः। एवमग्रेऽपि ज्ञेयम्। तथा रञ्जितस्य भावसमूहस्य विमर्शनाख्यां कृतिं कर्तुं रुद्राख्या रुद्राणीशक्तिः सती हरसि चमत्कारसमये स्वस्मिन् संहरसि। तदनन्तरमीश्वरसंज्ञकारणस्य दशामवस्थां विदधासि कुरुषे ऐश्वरीशक्तिस्वरूपा सती उद्भविष्यत्संसारबीजात्मकतामापन्नं नीलादिभावजातं बीजवदवस्थापनेन विलापयसीत्यर्थः। "यत्प्रयन्तीति श्रुतेः" तथा पाशौघस्य मलमायाकर्मनिकरस्य—

CC-0 Kashmir Research Institute. Digitized by eGangotri

*घृणाशङ्काभयंलज्जाजुगुप्सा चैव पञ्चमी ।
कुलं जातिश्च शीलं च त्वष्टौ पाशाःप्रकीर्तिताः ॥

इतिकुलचूडामण्युक्तस्थित्या घृणाशङ्कादयो वा पाशास्तेषां समूहस्य दलिनी निरस्यन्ती सादाख्या सदाशिवसंज्ञा भवन्ती सती बीजवदन्तरवस्थापितस्य नीलादेर्भावजातस्य हठपाकादिक्रमतः शिवयसि चिदग्निसाद्भावमापादयसि पूर्णतारूढ्यानुगृह्णासीत्यर्थः । "अभिसंविशन्तीति" श्रुतेः । अयं भावः श्रीमन्महार्थदृष्ट्या परैव चिच्छक्तिरेकैव माया प्रमात्रवस्थायामपि स्वभावलीलां कुर्वती दृगादिमरीचिदेवीविस्फारक्रमेण रहस्यरूपपञ्चविधकृत्यकारित्वेऽनेकधा ब्राह्म्यादिदेवीस्वरूपेण भातीति । तदाह त्वमेवेति, हे गिरिसुते ! त्वमेकैव सती इत्थं कृतिभेदैः सृष्ट्यादिकार्यभेदैःकरणैरनेका सृष्टिदेव्यादिप्रकारा भवसि तदुक्तम्—

"आभासनरक्तिविमर्शन बीजावस्थापनतद्विलापनतस्तानी"ति (प्र. हृ.-सू. ११)

स्वच्छन्देऽपि—

सृष्टिसंहारकर्तारं विलयस्थितिकारणम् ।
अनुग्रहकरं वन्दे प्रणतार्तिविनाशनम् ॥ (१प. श्लो. ३)

इति । अथ च मायां वशीकृतवतःस्वतन्त्रस्य तत्परिच्छिन्नस्येश्वरस्य पञ्चकृत्यभेदेनानेकविधत्वसंभव इत्याशयेन 'स्तौति विरिञ्च्याख्येति' तत्र ब्रह्माख्या शक्तिः रजोगुणप्रधानस्येश्वरस्य कृत्यं सृष्टिं सम्पादयति । तदाह—हे मातस्त्वं विरिञ्च्याख्या शक्तिः त्रिलोकीं सृजसि इति । तथा विष्णुसंज्ञा शक्तिः सत्त्वगुणप्रधानस्येश्वरस्य कृत्यं तद्रक्षणं करोतीत्याह हरिसंज्ञेति । तथा रुद्रसंज्ञा

---

*"तान्त्रिक टैक्स्ट्" इत्याख्यायां ग्रन्थमालायां श्रीगिरीशचन्द्रवेदान्ततीर्थमहोदयैः सम्पादिते १६१५ मितेऽब्देमुद्रिते कुलचूडामणितन्त्रे श्लोकोऽयं नोपलभ्यते ।

CC-0 Kashmir Research Institute. Digitized by eGangotri

शक्तिः रजोगुणप्रधानस्येश्वरस्य संहारात्मकृत्यकारिणी स च संहारो निःशेषतया अपि तु परमाण्वादिसावशेषत्वेन ध्वंसात्मक इत्याह--रुद्राख्या, रुद्र एवाख्या नाम यस्याःसा हरसि । विष्णुपुराणे—

ब्रह्मविष्णुशिवा ब्रह्मन् प्रधाना ब्रह्मशक्तयः ।

इति । रुजं द्रावयति रुद्रः रोदयतीतिवा, प्रलयकालिक्या वृष्टेः रुद्रस्य सूर्याख्यनेत्राज्जायमानत्वेनाश्रुरूपत्वात् । "सोऽरोदीद्यदरोदीत्तद्रुद्रस्य रुद्रत्वमि"-तिश्रुतेः । शिवरहस्येऽपि—

रुजंद्रावयते तस्माद्रुद्रः पशुपतिःस्मृतः ।

इति । "प्राणा वाव रुद्रा एते हीदं सर्वं रोदयन्तीति" छान्दोग्ये(३-१६-३)

तुष्ट्यर्थे ब्रह्मणःपुत्रो ललाटादुत्थितःस्वयम् ।
अरुदत् सस्वरं घोरं जगतःप्रभुरव्ययः ॥

इति भारते ।

रुद्दुःखं दुःखहेतुर्वा तद् द्रावयति यः प्रभुः ।
रुद्र इत्युच्यते तस्माच्छिवः परमकारणम् ॥

इति वायवीयसंहितायाम् । तथा ईश्वराभिधाना शक्तिर्विरलतरशुद्ध-सत्त्वप्रधानस्येश्वरस्य तिरोधानाख्यकृत्यकारिणी । तिरोधानं नाम जगतः प्रदी-पक्षयवन्निरवशेषत्वेन ध्वंसः प्रकृतौ लय इत्याह–विदधासीश्वरदशामिति तादृ-शेश्वरस्य दशा तिरोधानकारित्वम् । तदुक्तम्—

अभक्तानां च सर्वेषां तिरोधानकरी यतः ।

इति । तथा सदाशिवाख्या शक्तिर्घनतरशुद्धसत्वप्रधानस्येश्वरस्यानुग्रहा-ख्यकृत्यकारिणी । अनुग्रहस्तु पारिपूर्ण्येन स्वात्मैकतापादनम् । केचित्तु–अनु-ग्रहो नाम निरवशेषेण ध्वंसमापन्नस्य जगतः प्रकृतिलीनतया पुनः सृष्ट्यादौ

CC-0 Kashmir Research Institute. Digitized by eGangotri

परमाण्वादिरूपतापत्तिरित्याहुः। तत् स्तुतिकृतो न विवक्षितं शिवयसीत्युक्ति-व्याघातापत्तेरित्याह भवन्ती सादाख्येति। सादाख्या सदाशिवाभिधानेत्यर्थः। कीदृशी पाशानामहं ममेत्यादिरूपाणां बन्धनसाधनानां चतुर्णां मलरोधशक्ति-कर्ममायाकार्यलक्षणानामोघः समूहः प्रसरश्च। तदुक्तम्—

*प्रावृतीशो बलं कर्म मायाकार्यं चतुर्विधम्।
पाशजालं समासेन धर्मा नाम्नैव कीर्तिताः॥ (मृगे.तं., पा.१-२-७)

इति। अस्यार्थः प्रावृणोति प्रकर्षेणाच्छादयत्यणोः स्वाभाविक्यौ दृक्-क्रिये इति प्रावृतिर्मलः सचेष्टे स्वातन्त्र्येणेतीशः बलं रोधशक्तिः, कर्म शुभा-शुभात्मकं बीजाङ्कुरवत्प्रवाहरूपेणानादि, मायाकार्यं कलादित्रिंशत्तत्त्वात्मकत्वं, मात्यस्यां शक्त्यात्मना संहारेऽखिलंविश्वंसृष्टौ व्यक्तिमायातीति मायाशब्द-निरुक्तिः।

तदुक्तम्—

"शक्तिरूपेण कार्याणि तल्लीनानि महाक्षये।
विकृतौ व्यक्तिमायाति सा कार्येण कलादिना॥"

इति। एवमुक्तलक्षणस्य पाशौघस्य दलिनी ध्वंसिनी। अनुग्रहकृत्येन त्रिलोकीं शिवयसि शिवैकात्म्येनावभासयसि। हे गिरिसुते! वस्तुत एकैव त्वमुक्तकृतिभेदैरनेका भवसि। 'स ऐक्षत बहुस्यां प्रजायेये''तिश्रुतेः। अतस्त्व-मेवेह सर्वकामैरुपास्येत्यर्थः। उक्तञ्च मृगेन्द्रसंहितायाम्—

†जगज्जन्मस्थितिध्वंसतिरोधानैककारणम्।

---

*प्रावृतीशबले कर्मेति मु. पु. पाठः। †काश्मीरिकाप्रन्नविद्यानुसन्धानविभागद्वारा मुद्रिते (मृगेन्द्र तन्त्रे) पद्यमिदमित्थमुपलभ्यते – जगज्जन्मस्थितिध्वसतिरोभावविमु-क्तयः कृत्यं सकारकफलंज्ञेयमस्यैतदेव हि।

CC-0 Kashmir Research Institute. Digitized by eGangotri

भूतभौतिकभावानां नियमस्यैतदेव हि ॥ (१-२-३)

आगमान्तरेऽपि—

पञ्चविधं तत्कृत्यं सृष्टिःस्थितिसंहृती तिरोभावः ।
तद्वदनुग्रहकरणं जगतः सततोदितस्यास्य ॥

इति । देवीभागवतेऽपि—

सा विश्वं कुरुते कामं सा पालयति पालितम् ।
कल्पान्ते संहरत्येव त्रिरूपा विश्वमोहिनी ॥
तया युक्तःसृजेद्ब्रह्मा विष्णुः पाति तयान्वितः ।
रुद्रः संहरते कामं तया संमिलितो जगत् ॥
सा बध्नाति जगत्कृत्स्नं मायापाशेनमोहितम् ।
अहं ममेति पाशेन सुदृढेन नराधिप ! ॥
योगिनो मुक्तसङ्गाश्च मुक्तिकामा मुमुक्षवः ।
तामेव समुपासन्ते देवीं विश्वेश्वरीं शिवाम् ॥

इति । शक्तिसूत्रेष्वपि—

तथापि तद्वत्पञ्चकृत्यानि करोति (प्र.हृ.सू.१०) इति ॥२३॥

अधुना भक्त्या चरणविद्यामभिज्ञातवतः कस्यचिदेव महत् सौभाग्यमिति सूचयन् सामान्येन तज्ज्ञानमतिदुर्लभमित्याशयेनाह—

**मुनीनां चेतोभिः प्रमृदितकषायैरपि मनाग्**
**अशक्ये संस्प्रष्टुं चकितचकितैरम्ब ! सततम् ।**
**श्रुतीनां मूर्धानः प्रकृतिकठिनाः कोमलतरे**
**कथं ते विंदन्ते पदकिसलये पार्वति ! पदम् ॥२४॥**

CC-0 Kashmir Research Institute. Digitized by eGangotri

मन्यन्तेऽवबुध्यन्ते इति मुनयो मौनव्रतित्वाद् ब्रह्मसाक्षात्कारावधि श्रवणाद्यभ्यासपरिशीलिनो वसिष्ठवामदेवादयः। "बाल्यं पाण्डित्यं च निर्विद्याथ मुनिरिति" श्रुतेः परिशीलितश्रवणादिसाधनाः। श्रवणं तु उपक्रमोपसंहारादिभिः षड्विधलिङ्गैरुपनिषद्वाक्यानामद्वितीये ब्रह्मणि तात्पर्यावधारणम् तदुक्तम्—

उपक्रमोपसंहारावभ्यासोऽपूर्वताफलम्।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये॥

इति, तत्र यथा छान्दोग्ये षष्ठाध्याये—

'एकमेवाद्वितीयं ब्रह्मे'त्युपक्रम्य 'ऐतदात्म्यमिदं सर्वमि'त्याद्यन्तयोः (६-८-७) प्रतिपाद्यवस्तुनः प्रतिपादनमुपक्रमोपसंहारौ। पौनःपुन्येनावधारणमभ्यासः। यथा तत्रैव प्रकरणमध्ये तत्त्वमसीति नवकृत्वःप्रतिपादनम्। तं त्वौपनिषदं पृच्छामीत्यादिश्रुत्या ब्रह्मण उपनिषन्मात्रवेद्यत्वप्रतिपादनम्। स्वप्रकाशतया स्वाभासने स्वव्यतिरिक्तप्रमाणान्तरानपेक्षित्वं वा पूर्वत्वम्। फलं नामात्मज्ञानस्य तत् साधनानांवाखण्डब्रह्मस्वरूपसमापत्तिः। "ब्रह्मविद्ब्रह्मैव भवति"" तरति शोकमात्मवि'दित्यादिश्रुतेः (छा. ७-१-३)। यथा तत्रैवाचार्यवान् पुरुषो वेद तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथसम्पत्स्ये" इति अर्थवादः प्रशंसनं यथा तत्रैव—

उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवति अमतं मतमविज्ञातं विज्ञातमिति (छा. ६-१-३)। उपपत्तिर्नाम युक्तिः यथा तत्रैव—

'सौम्येकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमिति (छा. ६-१-४) मृद्विकृतिषु घटशरावादिषु विकारोनामधेयं मृत्तिकेत्येव सत्यं इति मृद्विकृतिषु घटशरावादिषु विकारोनामधेययोर्वाचारम्भणमात्रतया मृण्मयत्वावशेषपर्यवसानवद् ब्रह्मविवर्तस्य प्रपञ्चस्य ब्रह्ममात्रत्वपारिशे-

CC-0 Kashmir Research Institute. Digitized by eGangotri

ऽयात् । मननं तु श्रुतस्याद्वितीयब्रह्मण औपनिषदार्थाविरोधिनीभिर्युक्तिभिर्नैरन्तर्येणानुचिन्तनम् । निदिध्यासनं तु देहादिशून्यान्तर्वेद्यविषयप्रत्ययनिरासेनाद्वितीयब्रह्मविषयक प्रत्ययप्रवाहीकरणं समाधिर्नामेत्यलं विस्तरेण । तेषां मुनीनां चेतोभिर्मनोभिः प्रमृदितकषायैर्विगलितकषायाख्यसमाधिविघ्नैः । कषायपदेन लयविक्षेपावपि गृह्येते । तत्र प्रत्यगभिन्नाखण्डस्वरूपानवलम्बनेन मनोवृत्तेर्निद्रा-लयः । तथैव त्रस्तपक्षिवद् बाह्यविषयग्रहणायैव तत्प्रवृत्तिर्विक्षेपः, तयोरभावेऽपि रागादिवासनया चित्तवृत्तेः प्रत्यक् चैतन्यानवलम्बनेन स्तब्धीभावः कषाय इति ।

हे अम्ब ! ते तव पदकिसलये पदे निर्वाणाख्यचरणे किसलये इव मनोहरमृदुस्वभावे गुणातीतत्वादुक्तचरणस्याद्वैतरूपत्वादेकत्वेन निर्देशः । तत्राधिकरणभूते मनागीषत् संस्प्रष्टुमपि निर्विकल्पसमाधिना सम्प्रज्ञातुमप्यशक्ये, स्पर्शमात्रादेव तन्मयत्वापादने पृथगवस्थानासम्भवेन स्प्रष्टृस्पृश्यतारूपसम्बन्धा-प्रतिभासाद् भयदर्शनाच्चेतिभावः । तदेव हेतुद्वाराह—

यतस्तैः सततं नित्यं चकितचकितैरतिभीरुभिः "अभये भयदर्शनात्" इति श्रुतेः सविकल्पानन्दरसास्वादनासक्तत्वाच्च । तदुक्तम्—

> लये सम्बोधयेच्चित्तं विक्षिप्तं शमयेत् पुनः ।
> सकषायं विजानीयाच्छमप्राप्तं न चालयेत् ॥
> नास्वादयेद्रसं तत्र निःसङ्गःप्रज्ञया भवेत् ।

इति । गीतास्वपि—

> प्रजहाति यदा कामान् सर्वान् पार्थ मनोगतान् ।
> आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यते ॥ (भ. गी. २-५५)

इति । श्रुतिरपि—

> यदा सर्वे प्रमुच्यन्ते कामा येऽस्यहृदि स्थिताः ।

CC-0 Kashmir Research Institute. Digitized by eGangotri

अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥(कठो.६-१४बृ.उ.४-४७)

इति। एवं पूर्वार्धोक्तविशेषणेन चरणकिसलयस्य मुनिमनसामप्यगम्यत्वमित्युक्तम्। श्रुतिः—यन्मनसा न मन्वते" इति, "नैनं वाचा न मनसा प्राप्तुं शक्यो न चक्षुषेति"च। न तत्र चक्षुर्गच्छति न वाग् गच्छति न मन इति च।" उतरार्धेन वाचामप्यगम्यत्वमित्याह—हे पार्वति! श्रुतीनां वेदानामृगादीनां मूर्धानो मूर्धवत्प्रधाना रहस्यार्थप्रतिपादकत्वादुपनिषद्भागाः प्रकृत्या स्वभावेन कखाद्यवर्णात्मकवैखरीवागुच्चार्यत्वात् कठिना इदम्भावपरामर्शारूढ्या अकोमलाः सन्तस्ते तत्र पदकिसलये पदं स्थानं कथं विन्दन्ते प्राप्नुवन्ति, कोमलतरेषु प्रकृतिकठिनानां स्थानप्राप्त्यसंभवात्। स्थानालाभे हेतुतया विशेषणमाह—कीदृशे पदकिसलये कोमलतरे पूर्णाहंभावचमत्कारसारतया स्पृहणीये, वैखर्यादिस्थूलवागुच्चाराविषयत्वात् ततस्पर्शामहे च पश्यन्तीवाग्विषय इत्यर्थः "यतो वाचो निवर्तन्ते" इत्यादिश्रुतेः।

अयं भावः—श्रुतयो विधिमुखेन पराशक्तिस्वरूपं प्रतिपादयितुमशक्तत्वान्नेति नेत्यादिवाग्भिरतद्व्यावृत्तिमात्रव्यापृतत्वेन कथञ्चित्प्रतिपादयन्तीव, तासां स्थूलारुन्धतीन्यायेन ताटस्थ्यलक्षणयैव प्रवृत्तत्वात्। "यद्वाचा नाभ्युदितं येन वागभ्युद्यते" इति श्रुतेर्वागविषयत्वं प्रतिपाद्यते। तदुक्तं भास्कररायपादैः-स्वकृतशिवस्तवे--

सर्वज्ञाः श्रुतयोऽपि याः परशिव त्वत्प्राणभूताःप्रियाः
शृङ्गग्राहिकया त्रपाभृत इव त्वां न प्रजल्पन्ति ताः।
अन्यानेव तु नेति नेति बहुशो वाचा निषेधन्ति चेत्-
कोऽन्यस्त्वामिदमित्थमित्यनुवदेत्तत्रापि मादृग्जनः॥

इति। तं त्वौपनिषदं पृच्छामि" इतिश्रुत्या, मनसैवानुद्रष्टव्य इति-श्रुत्या च मनोवाग्वेद्यत्ववचनादुक्तश्रुतिविरोधप्रसंगस्य शक्तिलक्षणापरतया

CC-0 Kashmir Research Institute. Digitized by eGangotri

पक्वापक्वमलपरत्वव्यवस्थापरिकल्पनेन निरस्तत्वादिति सर्वमनवद्यमिति ॥२४॥

एवं वागाद्यविषयतामुक्त्वा इदानीमुपचरिताभिर्वाग्भिरप्यलौकिकतां प्रदर्शयन् चिद्रसाह्लादमयपरवाक्स्फाराहन्ताविषयकविकल्पैःसतां परामर्शं भगवतीविषयं प्रस्तौति ।

**तडिद्वल्लीं नित्याममृतसरितं पाररहितां**
**मलोत्तीर्णां ज्योत्स्नां प्रकृतिमगुणग्रन्थिगहनाम् ।**
**गिरां दूरां विद्यामविनतकुचां विश्वजननी-**
**मपर्यन्तां लक्ष्मीमभिदधति सन्तो भगवतीम् ॥२५॥**

सन्तः सुधियो भगवतीं "प्राक्संवित्प्राणे परिणतेत्युक्त्या" सङ्कुचितप्रमातृभावावबिभासयिषायां पूर्वमप्राणाद्यस्पन्दात्मतां गृहीतवतीं नित्यामचलामविनाशिनीं तडिद्वल्लीं स्थिरविद्युल्लतावद् भासमानां मध्यमार्गेण परशिवावधिं गच्छन्तीं कुण्डलिनीशक्तिरूपामभिदधति वदन्ति "विद्युल्लेखेव भास्वरेति" श्रुतेः । तदुक्तमाचार्यपादैः—

"मूलाधारादुत्थितवन्तीं विधिरन्ध्रं
सौरं चान्द्रं धाम विहाय ज्वलिताङ्गीम् ।
ध्येयां सूक्ष्मात् सूक्ष्मतरां तां तडिदाभां" (गौरीस्तुति. श्लो. ६)

इति । तथा श्रीविद्यार्णवे ५मे श्वासे—

मूलाधारे त्रिकोणे तु सूर्यकोटिसमत्विषि ।
प्रसुप्तभुजगाकारां सार्धत्रिवलयस्थिताम् ॥
नीवारशूकवत्तन्वीं तडित्कोटिसमप्रभाम् ।
सूर्यकोटिप्रभादीप्तां चन्द्रकोटिसुशीतलाम् ।

CC-0 Kashmir Research Institute. Digitized by eGangotri

शिवशक्तिमयीं देवीं शङ्खावर्तक्रमात्स्थिताम् ।
सुषुम्णामध्यमार्गेण यान्तीं परशिवावधि ॥

इति । शारदायामपि—

मूलोन्निद्रभुजङ्गराजसदृशीं यान्तींसुषुम्णान्तरं
भित्त्वाधारसमूहमाशु विलसत्सौदामिनीसन्निभाम् ॥ (प. २५ श्लो. ६४)

इत्यादि । तडित्त्वनित्या इयं हि नित्येति अत्र व्यतिरेकः । अथ च तडिद्वल्लीरूपा चला नास्तीति विरोधाभासोऽपि । एवमारोहक्रमेण स्वरूपमुक्त्वावरोहणक्रमस्वरूपं परामृशति, तथा पाररहितामपारामसमाप्तां चामृतसरितं शीतलस्पर्शानन्दप्रदत्वात्प्रवहन्तीममृतनदीमभिदधति । त्रिकोणपीठादुल्लास्य मध्यमार्गान्तः प्रवेशेनानाहतमण्डलमर्कं भित्त्वा सहस्रारस्थेन्दुमण्डलविद्रावणपूर्वमकुलकुण्डलिन्या सङ्गम्य तदुत्थसुधाधाराप्लुता परावृत्य सरिद्वत् द्रुतं प्रवहणात् सैव शक्तिरमृतनदीत्युच्यते इत्यर्थः । तदुक्तं ज्ञानार्णवे—

मूलादिब्रह्मरन्ध्रान्तंस्रवत्पीयूषवर्षिणीम्* । (३प. २५)

इति । यद्वा ब्रह्मानन्दाममृतमयीमपरिच्छिन्नां सरितं, सरिद्धि सपारा भवति,इयं त्वपारेति व्यतिरेकः। अथ च नदीरूपा सती सपारा नास्तीति विरोधाभासः । एवमग्रेऽपि बोध्यम् । तथा मलोत्तीर्णाणवादिमलत्रयातीता ज्योत्स्ना बिन्दुस्थपरशिवेन्दुचिचन्द्रिकारूपा शक्तिर्जगतामह्लादयित्री अथ च निष्कलङ्का कौमुदी । तथा प्रकृतिः सदाशिवादिभूम्यन्ताशेषजडाजडजगतो मूलकारणरूपा । कीदृशी अगुणग्रन्थिगहना सत्त्वादिगुणरूपैर्ग्रन्थिभिर्बन्धनैर्गहना दुष्प्राप्या दुर्ज्ञेया नास्ति । तत्त्वरूपा प्रकृतिर्हि त्रिगुणसाम्यात्मिका, अस्यास्तु तत्त्वोत्तीर्णतया तथात्वाभावात् प्राग्वद् व्यतिरेकविरोधाभासौ तथा गिरां वाचां दूरामगम्यां

---

*मूलादिब्रह्मरन्ध्रान्तं बिसतन्तु तनीयसीमिति पाठान्तरम् ।

CC-0 Kashmir Research Institute. Digitized by eGangotri

विद्यां परावाग्रूपिणीम् तदुक्तं स्वच्छन्दे—

वेदनानादिधर्मस्य परमात्मत्वबोधना ।
वर्जना परमात्मत्वे तस्माद्विद्येतिचोच्यते ॥
तत्रस्थो व्यञ्जयेत्तोजः परं परमकारणम् ।
परस्मिंस्तेजसि व्यक्ते तत्रस्थः शिवतां व्रजेत् ॥ (प. ४-३९६-९७)

इति । असौ प्रकाशानन्दसाराकृत्रिमपूर्णाहन्ता विमर्शमयी मायीयशब्द-राशिजीवितत्वेन स्वान्तःक्रोडीकृताशेषवाच्यवाचकमयजगदानन्दस्फुरत्ताप्रसरणान्निराकांक्षा अत एवानन्दनिर्भरत्वादकाराद् व्योमकलान्तं प्रसृतस्य विश्वस्यानुत्तरविसर्गकलाभ्यां प्रत्याहारन्यायेन सम्पुटीकृत्याविभागवेदनबिन्दुरूपतयानुत्तर एव विश्रमणादिति विश्वानन्दसंरम्भसारमहामन्त्रमयी परावागात्मा विद्या, वैखर्यादिवाचामविषयिणीत्यर्थः । यतो वाचो निर्वतन्ते इति, तदु नात्येति कश्चनेत्यादि श्रुतेः । विष्णुपुराणेऽपि ।

यातीतगोचरा वाचां मनसां चाविशेषणा ।
ज्ञानिज्ञानपरिच्छेद्या वन्दे तामीश्वरींपराम् ॥

इति । तदुक्तम्—

प्रत्यवमर्शात्मा चितिरसौ स्वरसवाहिनी परावाक् या ।
आद्यन्तप्रत्याहृतवर्णगणा सत्यहन्ता सा—— ॥

इति । अथ च विद्या मन्त्रवर्णादिरूपा सा कथं वाग्विषया स्यादिति प्राग्वत् । तथा विश्वस्य प्रागुक्तस्य जनन्युत्पादिका । कीदृशी अविनताविदन्तात्मवेद्यभागानिर्मग्नौ कुचौ ज्ञानक्रियाशक्तिरूपौ यस्यास्तदारूढस्यैव सर्वस्य वेद्यस्याभासनात् तदुक्तं रुद्रयामले—

नभो महाबिन्दुमुखी सूर्यचन्द्रस्तनद्वया ।

CC-0 Kashmir Research Institute. Digitized by eGangotri

इति । सूर्यचन्द्रे ज्ञानक्रिये इत्यर्थः । आचार्यपादैरपि—भ्रमयतिरवीन्दुस्तनयुगामिति, अन्यत्रापि—

*स्तनौ घनौ पूर्णसुधौ सुकान्ती तवेश ! नन्दामि परस्पराभौ ।
स्थितौ समानाधिकृतौ स्वविद्ये समौ तवैवाहमिदम्प्रकाशौ ॥

इति । यापि जननी साकथमविनतस्तनी स्यात् प्रसवे कुचपतनप्रसिद्धेरिति प्राग्वत् तथा लक्ष्मीर्विश्ववैचित्र्यावभासनशोभा स्वप्रकाशमयी, तत्प्रकाशावेशं विना कस्यापि प्रकाशमानत्वानुपपत्तेः । तदुक्तं देविकायाम्—

तत्तद्रूपतया ज्ञानं बहिरन्तःप्रकाशते ।
ज्ञानादृते नार्थसत्ता ज्ञानरूपं ततो जगत् ॥
नहि ज्ञानादृते भावाःकेनचिद्विषयीकृताः ।
ज्ञानं तदात्मतां यातमेतस्मादवसीयते ॥

इति । कीदृशी अपर्यन्ता सततोदितत्वादनस्तमिता, नहि द्रष्टुर्दृष्टेर्विपरिलोप इति श्रुतेः । अथ च लक्ष्मीरपर्यन्ता निरवसाना । यापि हिरण्यादिसंपत् सा कथमवसानरहिता स्यादिति प्राग्वदिति ॥२५॥

अधुना तैर्थिकानां तु देहात्मविवेककौशलत्वेऽपि त्वदीयरहस्यसमाचारानुग्रहविरहाद्वस्तुतोऽनात्माभिमानो न विलीयत इत्याह—

**शरीरं क्षित्यम्भःप्रभृतिरचितं केवलमिदं**
**सुखं दुःखं चायं कलयति पुमांश्चेतन इति ।**
**स्फुटं जानानोऽपि प्रभवति न देही रहयितुं**
**शरीराहङ्कारं तव समयबाह्यो गिरिसुते ! ॥२६॥**

---

*मातङ्गीस्तोत्रान्तर्गतमिदं पद्यम् ।

CC-0 Kashmir Research Institute. Digitized by eGangotri

इदं शरीरं भोगायतनरूपं क्षित्यम्भः प्रभृतिभिः पृथिव्यबादिभूतैः रचितं निर्मितं, मातापितृभ्यामुपभुक्तान्नरसजन्यशुक्रशोणितधातुदोषपरिपाकपरिपाट्या चक्राधारग्रन्थिनाड्यादिसङ्कुलं समुत्पद्य वर्धमानं भौतिकपिण्डात्मकं केवलमन्यानामिश्रं जडभूतोत्पन्नत्वाज्जडमचेतनं कृतकत्वादनित्यं च। यत् कृतकं तदनित्यमिति न्यायादिति रचितमित्युक्तेरभिप्रायः। यद्वेदमेतादृशं शरीरमयं पुमान् प्रत्यगात्मरूपः कलयति वेदकत्वाद्वेद्यतया पृथगनुभवति। वेदितुर्हि वेद्यं पृथगस्ति सोऽपि तस्मादिति सर्वजनस्वसंवेद्यम्। कीदृशं क्षित्यादिभूतजन्यं। न केवलं बाह्यमेव कलयति अपि त्वन्तःस्थं सुखं दुःखं च हेयोपादेयवस्तुजातोपनतसुखाद्यनुभवमपि तद्द्वारानुभवति। अन्तरिन्द्रियवेद्यमपि सुखादिकमयं पुमान् स्वतो भिन्नतया जानातीत्यर्थः। यतश्चेतनोऽजडःसङ्कुचितप्रमातृत्वेऽपि इच्छाज्ञानक्रियासंयोजनवियोजनादिषु स्वतन्त्रः। स्वातन्त्र्यमेवाजडत्वं चित्सारत्वात्, तद्विकलस्य प्रकाशस्य तुच्छत्वात्पाषाणादिप्रायत्वमित्यास्तामेतत्। इत्थं देहात्मविवेके देहदेहिनोर्ज्ञेयज्ञातृत्वभेदप्रतीतेः सौकर्यात् कस्याप्यज्ञेयत्वाशङ्का नोपपद्यत इत्यर्थः। एवं देही शरीराभिमानी साधारणो जनः स्फुटं प्रकटं जानानोऽवबुध्यमानोऽपि हे गिरिसुते! हैमवति शरीराहङ्कारं देहाद्यभिमानजन्यसङ्कुचितप्रमातृभावं रहयितुं परित्यक्तुं न प्रभवति न प्रगल्भते। अहङ्कारश्च षोढा दृश्यते तदुक्तम्—

संपन्नोऽस्मि कृशोऽस्मि स्विद्यत्करणोऽस्मि मोदमानोऽस्मि।
प्राणिमि शून्योऽस्मीति षट्सु पदेष्वस्मिता दृष्टा॥

इति, ननु कोऽयं प्रकारो यत्सौकर्येऽपि अक्षमत्वमित्याशङ्क्य तत्र हेतुमाह तव समयेति, यतस्तव समयाद्गुरुमुखैकवेद्याद्रहस्याचाररूपात् सङ्केताद् बाह्यो बहिर्भूतोऽसौ अप्राप्तपूर्णाभिषेकतया तदनधिकारित्वेन रहोयागानभिज्ञः। तदवगमे हि निरवशेषतया तत् संस्कारस्यापि विगलनात्तदारूढप्रमितेस्तत्क्षया-

CC-0 Kashmir Research Institute. Digitized by eGangotri

जीवसंक्षयः' इत्युक्तस्थित्या पुर्यष्टकप्रमातृभावोपशमेऽखण्डचित्प्रमातृताप्रस्फुरणात् सङ्कुचिताभिमान उपशाम्येदित्यर्थः ॥२६॥

इदानीमतितीव्रशक्तिपातसमयं स्वस्मिन्नावेदयन्नविलम्बेन तत्कालकर्तव्यतां प्रार्थयते—

**पिता माता भ्राता सुहृदनुचराःसद्म गृहिणी**
**वपुः पुत्रो* मित्रं धनमपि यदा मां विजहति ।**
**तदा मे भिन्दाना सपदि भयमोहान्धतमसं**
**महाज्योत्स्ने ! मातर्भव करुणया सन्निधिकरी ॥२७॥**

महती देशकालाद्यपरिच्छिन्नाभावव्यापिनी च ज्योत्स्ना साह्लादप्रकाशरूपा कान्तिर्यस्याः सा महाप्रकाशमयी संवित् । तदुक्तं प्रत्यभिज्ञायाम्—

सा स्फुरत्ता महासत्तादेशकालाविशेषिणी । (अ. १ आ. ५. का १४)

इति । महार्थमञ्जर्यामपि—

कः सद्भावविशेषः कुसमाद् भवति गगनकुसुमस्य ।
यत्स्फुरणानुप्राणो लोकःस्फुरणं च सर्वसामान्यम् ॥ (श्लो. ३२)

इति, अतो देशपरिच्छेदाभावाद्विभुः कालपरिच्छेदाभावान्नित्या मूर्तिपरिच्छेदाभावादनन्तेत्यर्थलभ्यम् । अथ च महती अर्कादिजडाभासैरनाभास्या, तेषामपि प्रकाशिका । "न तत्र सूर्यो भाति न चन्द्रतारकमिति"श्रुतेः । न तद्भासयते सूर्योऽइत्यादिस्मृतेश्च । हे महाज्योत्स्ने ! मातः ! तत्सम्बुद्धिः पित्रादयो यदा मां विजहति वियुञ्जीरन् तदा मे तत्तद्वियोगित्वादनुग्रहयोग्यस्य "योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति स न वेद यथा पशुरिति"-

---

*क्षेत्रमिति पाठान्तरम् ।

CC-0 Kashmir Research Institute. Digitized by eGangotri

श्रुतेः। "द्वितीयाद्वै भयं भवति य एतस्मिन्नुदरमन्तरं कुरुतेऽथ तस्य भयं भवतीति च" श्रुतेः पशुत्वाविर्भावापादकत्वाद् भयं त्रासो मोहोऽस्मितात्मकः अन्धतमसं देहाद्यभिनिवेशात्मकमेतत् पञ्चानां क्लेशानामुपलक्षणपरम्। ते यथा लिङ्गपुराणे—

अविद्यामस्मितां रागं द्वेषञ्च द्विपदां वर!।
वदन्त्यभिनिवेशं च क्लेशान् पाशत्वमागतान्॥
तमो मोहो महामोहस्तामिस्रमथ पण्डिताः।
अन्धतामिस्रमित्याहुः क्लेशान् वै पञ्चधा स्थितान्॥
अविद्या तम इत्याहुरस्मिता मोह इत्यपि।
रागं चैव महामोहं द्वेषस्तामिस्रमित्यपि॥
अन्धतामिस्रकं मिथ्याभिनिवेशं प्रचक्षते।

इति। भयमोहान्धतमसं तत्तद्धेतुजन्यं भिन्दानापहरन्ती सपदि झटिति करुणया तीव्रशक्तिपातेन पूर्णानुग्रहलक्षणं शक्तिपातं विना सान्निध्याभावात्। तथा च श्रुतिः—

नायमात्मा प्रवचनेन लभ्यस्तस्यैष आत्मा वृणुते तनूं स्वामितिसन्निधिकरी सन्निहिता साक्षादवभासमाना भवेति, येन त्वामेवसमाविशेयमितिप्रार्थनायां लोट् प्राणायामादिसमस्तयन्त्रणातन्त्रत्रोटनेन सहसा विकल्पनिजचिन्मयपरानुभूतिसमापत्तिं कुर्वित्यर्थः। तदुक्तं श्रीमदुत्पलाचार्यपादैः—

नध्यायतो न जपतः स्याद्यस्याविधिपूर्वकम्।
एवमेव शिवाभासस्तं नमो भक्तिशालिनम्॥ (उ. स्तो. १. श्लो. १)

इति, यद्यपि तत्तत्स्वरूपसाक्षात्करणचमत्कारानुभूतिर्ममाविरतमेवानुवर्तमानैव तथापि तत्तद्वियोगभयादिभिस्तत्कालेऽभिभवात् स्वरूपावरणं माभूदि-

CC-0 Kashmir Research Institute. Digitized by eGangotri

त्यर्थः । यद्वा यदेति संन्यासावसरे । तदेति तत्कालेऽपि पित्रादिधनपर्यन्त-वस्तुजातोपक्षयलक्षिते त्वदनुग्रहं विना अविरताविस्मरणविमर्शात्मवीर्यप्राप्यो-ऽपि स्वात्मसाक्षात्कारो दुर्लभ इति तदानीमप्यहमनुग्राह्योऽस्मीतिभावः । श्रुति-श्च—

नायमात्मा बलहीनेन लभ्यो नच प्रमादात्तपसो वाप्यलिङ्गात् ।
एतैरुपायैर्यतते यस्तु विद्वांस्तस्यैष आत्मा विशते ब्रह्मधाम ॥(मुंड.३-२-३)

इत्यत्र बलहीनेनेति शक्तिपातबलरहितेनेत्यर्थः ॥२७॥

ननु प्रार्थ्यमानः सद्यः सन्निधिः कथं स्यादित्याशङ्क्य भगवत्याः स्वा-तन्त्र्यविलसितं दुर्ज्ञेयमिति सूचयन् तद्व्यतिरिक्तब्रह्मादिकारणेष्वल्पज्ञतामभि-धत्ते इत्याशयेन स्तौति—

**सुता दक्षस्यादौ किल सकलमातस्त्वमुदभूः**
**सदोषं तं हित्वा तदनु गिरिराजस्य तनया* ।**
**अनाद्यन्ता शम्भोरपृथगपि शक्तिर्भगवती**
**विवाहाज्जायासीत्यहह चरितं वेत्ति तव कः ॥२८॥**

हे सकलमातः ! सकलस्य प्रमातृप्रमेयरूपस्य विश्वस्य मातरुत्पादिके ! आदौ सर्गारम्भे दक्षस्य प्रजापतेः सुता आत्मजा किल त्वमुदभूरुत्पन्ना किलेति वार्तायाम् । पुराणेष्वेवं श्रूयते दक्षाज्जन्म लब्ध्वा तत्रापि शिववरणात्तस्य पत्नी सम्पन्नासीत्यर्थः एवमग्रेऽपि । तदुक्तं कालिकापुराणे—

प्रतिसर्गादिमध्यान्तमहं शम्भुं निराकुलम् ।
स्त्रीरूपेणानुयास्यामि प्राप्य दक्षादहं तनुम् ॥

*दुहिता इति पाठान्तरम् ।

CC-0 Kashmir Research Institute. Digitized by eGangotri

इत्यादि । तथा तदनु तदनन्तरं तं दक्षं गुरुमपि सदोषं हित्वा आह्रियमाणे यज्ञे शिवस्यासम्भावनया आत्मजाया अवमाननात्सापराधं सन्तं विहाय तज्जां तनुं परिहायेत्यर्थः । अविद्यमानावाद्यन्तावुदयास्तमयौ जन्ममरणे यस्याः सा अनाद्यन्ता जन्ममरणहीनापि "न जायते म्रियते वा विपश्चित्" इति श्रुतेः गिरिराजस्य हिमवतस्तनया उदभूः सम्पन्नासि । जन्मपरिग्रहेण हिमवन्तं पितरं योगमायया कृतवतीत्यर्थः । अपिरावृत्त्या योज्यः । सकलमातृत्वे कथं सुताभावो जन्मादिराहित्येऽपि कथं जन्मादिग्रहणं चेति विरोधद्योतकमाश्चर्यम् । पुरा हिमवच्छिखरस्थं सदेवीकमीशानं द्रष्टुं सर्वे देवादयो जग्मुः । दक्षोऽपि सहामरैर्जामातरं द्रष्टुं ययौ । तस्य तत्र विशेषगौरवालाभात् पुत्र्यां वैरबुद्धिरजायत । ततो विधिचोदितेन दक्षेणारभ्यमाणे यागे सर्वेषु जामातृष्वाहूतार्चितेषु पुत्रीद्वेषाद् भवं नाजुहाव । नारदमुखाच्छ्रुतवृत्ता रुद्राणी पत्युरनुमत्यानाहूतैव ययौ पितृगृहम् । पित्रावमता सा तमनभिनन्द्य शप्त्वा च तनुं विहाय हिमवन्तं योगमायया पितरं चक्रे, इत्यादीतिवृत्तं वायवीयसंहितायां षोडशाध्याये प्रपञ्चितम् । देवीपुराणेऽपि—

जाता शैलेन्द्रगेहे सा शैलराजसुता ततः ।

इति, तथा शम्भोः परशिवस्यापृथगपि प्रकाशजीवितप्रायतया नित्यसमवेतत्वादभिन्नापि भगवती स्वातन्त्र्याख्या शक्तिः । तदुक्तम्—

शक्तिश्च शक्तिमद्रूपाद्व्यतिरेकं न वाञ्छति ।
तादात्म्यमनयोर्नित्यं वह्निदाहिकयोरिव ॥

इति, तथा—

*न शिवेन विना देवी न देव्या विना शिवः ।
नानयोरन्तरं किञ्चिच्चन्द्रचन्द्रिकयोरिव ॥

---

*सर्वमङ्गलाशास्त्रे गतंपद्यमिदम् ।

CC-0 Kashmir Research Institute. Digitized by eGangotri

इति, एवंविधा त्वं हैमवती भूत्वा तपसा प्रसादितस्य शम्भोर्विवाहात्पाणिग्रहं विधाय जाया कामेश्वरीभावेन पत्न्यसि भवसि। "स इममेवात्मानं द्वेधापातयत् ततः पतिश्च पत्नी चाभवतामिति" श्रुतेः। अपृथक्त्वेऽपि पृथग्भावेन जायाभवनमित्याश्चर्यम्। श्रूयते हि हिमालयशिखरे पतिलाभाय दुश्चरं तपस्तपस्यन्तीं गौरीं सप्तर्षिद्वारा हिमवत्प्रार्थनापूर्वं शिवः पुनरुदुवाह। तदुक्तं ललितोपाख्याने—

हिमवच्छैलशिखरे गौरीशिखरनामनि !
चकार पतिलाभाय पार्वती दुश्चरंतपः॥

इत्यादि—

अथाद्रिपतिना दत्तां तनयां नलिनेक्षणाम्।
सप्तर्षिद्वारतः पूर्वं प्रार्थितामुदवोढ सः॥

इत्यन्तम्, एवमुक्तप्रकारेण शिवाभेदस्वभावत्वेऽपि प्रकाशाद्विमर्शांशभेदोद्भावनकलया तस्माद्विभिद्य पुनस्तत्समावेशोत्सुकतयाभीक्ष्ण्येन तमेव संवृण्वानायास्तव अहहाद्भुतं चरितं सद्वृत्तं लीलास्वातन्त्र्यं को वेत्ति जानाति न कश्चिदित्यर्थः। सर्वज्ञां त्वां विना कारणस्थानीयानामपि ब्रह्मादीनामल्पज्ञत्वेन त्वच्चारित्रतत्त्वानभिज्ञत्वात् स्वयमेव त्वं स्वचेष्टाप्रवृत्तिनिमित्ताभिप्रायं जानीषे इतिभावः। एतेन पतिव्रताया जन्मान्तरेऽपि स्वपत्यनुसरणसमानलोकोपभोगादिपातिव्रत्यमाहात्म्यं प्रकटितमित्यपि बोध्यम्।

आभ्यन्तरः संवित्क्रमार्थोऽत्रसहृदयसंवेद्य इति ते स्वयमेवाभ्यूहेयुरिति नोन्मील्यते। तत्र दक्षहिमालयौ सूक्ष्मस्थूलौ पर्यालोचनीयाविति॥२८॥

एवमत्यद्भुतस्वातन्त्र्यविलसितं प्रपञ्चयन् परशाक्ततेजसः स्वप्रकाशत्वजगदानन्दस्वरूपत्वविश्वाधारत्वमित्यामृशति—

CC-0 Kashmir Research Institute. Digitized by eGangotri

**कणास्त्वद्दीप्तीनां रविशशिकृशानुप्रभृतयः**
**परं ब्रह्म क्षुद्रं तव नियतमानन्दकणिका।**
**शिवादिक्षित्यन्तं त्रिवलयतनोः सर्वमुदरे**
**तवास्ते भक्तस्य स्फुरसि हृदि चित्रं भगवति!॥२९॥**

हे भगवति! परस्वातन्त्र्यशक्तिस्वरूपे! रविशशिकृशानुप्रभृतयोऽर्केन्द्वग्न्यादयः प्रकाशास्त्वद्दीप्तीनां तव रश्मीनां कणा लेशाःसन्ति। यस्य कणस्थानीयोऽर्कादिः स कियान् स्यादित्याश्चर्यम्। एतेन लोके प्रसिद्धैतावन्मण्डलमर्कादिलिङ्गं लिङ्गिनस्त्वदीयमहातेजःपुञ्जस्यानुमानादपरिमेयत्वं गमयतीति ध्वन्यते। अत एवार्कादयस्तत्कणप्रायतया स्वात्मलाभाय तन्मुखप्रेक्षिणस्तत्स्वरूपं स्वप्रकाशं भासयितुमक्षमा इत्यपि सूच्यते। "तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति' इतिश्रुतेः। प्रभृतिशब्देन विद्युदादि गृह्यते। अथ च

सूर्यं प्रमाणमित्याहुः सोमं मेयं प्रचक्षते।
योऽयमग्नेः परं रूपं प्रमातुरिदमेव तत्॥

इत्यागमदृशा रव्यादिवाच्याः प्रमातृप्रमाणप्रमेयप्रकाशाः प्रतिप्रमातृप्रसरन्तस्तव महाप्रकाशसंविद्रूपाया व्योमवामेश्वर्याः दीप्तीनां खेचर्यादिमातृकारूपाणां रश्मीनां कणा अणव अतस्तेषां प्रकाशाभेदेनानवभासमानानां तथा तथा संविदेवविजृम्भते।

अर्केन्दुदीपाद्यवभासभिन्नं नाभात्यति व्याप्ततया ततश्च।
प्रकाशरूपं तदियत्प्रकाशप्रकाश्यताख्याव्यवहार एव॥

इति, तत्तद्रूपतया ज्ञानं बहिरन्तःप्रकाशते। इत्यादि च एवं संविन्नाथस्य

CC-0 Kashmir Research Institute. Digitized by eGangotri

परमेश्वरस्य पञ्चधा वहतो मूर्तिप्रकाशानन्दचक्रोल्लासमहार्थः सूचितो भवति। स च देशिकनाथमुखादवगन्तव्य इत्यलं तत्प्रकाशनवाचालतया। तथा परं विश्वोत्तीर्णं ब्रह्म चित्प्रकाशमात्ररूपं तवानन्दाब्धिरूपाया इत्यर्थतो गम्यम्। आनन्दस्य कणिकाणुर्नियतं निश्चितमस्ति मन्ये इत्यर्थः। "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति" (बृह. ४-३-३२) इति श्रुतेः अत एवाल्पकणत्वात् क्षुद्रमसारं तुच्छं विश्वापेक्षया च तदुत्तीर्णस्वभावस्य तस्य परिच्छिन्नत्वात्। यस्यानन्दकणिका परं ब्रह्म स आनन्दसागरः कियान् स्यादित्यपि (चित्रं चित्रमिति सर्वत्रानुषञ्जनीयम्)। तदुक्तम्—

त्रैलोक्येऽप्यत्र यो यावानानन्दःकश्चिदीक्ष्यते।
स बिन्दुर्यस्य तं वन्दे देवमानन्दसागरम्॥ (स्तव. चि. ६१)

इति भट्टनारायणोक्तेः। यद्वा श्रुत्यन्तविदभिमतस्य मायोत्तीर्णस्य ब्रह्मणो निर्विमर्शत्वेनानीश्वरजडापत्तेः क्षुद्रत्वम्। ततस्तस्यतदुत्तरतत्त्वान्तर्भावेनाल्पानन्दकणिकात्वमुपपद्यते। एतेन विमर्शमवधीरयद्भिस्तैर्ब्राह्याद्वैतसिद्धान्तस्थैः पाशवशासनशय्यैवाधिशय्यते इति सूचितम् तदुक्तमद्वैतवादनिर्वाहः" इति प्राग्विततमेतत्। तथा शिवादि शिवतत्त्वात् प्रभृति क्षित्यन्तं पृथिवीतत्त्वपर्यन्तं षट्त्रिंशत्तत्त्वजातं तद्यथा—

शिवशक्तिसदाशिवेश्वरशुद्धविद्यामायाकलाविद्यारागकालनियतिप्रकृतिपुरुषाहङ्कृतिबुद्धिमनः श्रोत्रत्वक्चक्षूरसनाघ्राणवाक् पाणिपादपायूपस्थ शब्दस्पर्शरूपरसगन्धाकाशवायुवह्निसलिलभूमयः।

तल्लक्षणानि चामृतानन्दपादैर्निरूपितानि तत्त्वसन्दोहे। एतत्सर्वं सतनुकरणभुवनमशेषं तव परस्याः शक्तेरण्डचतुष्टयव्यापिकाया उदर अन्तरास्तेऽवतिष्ठते। तव कीदृश्याः त्रयो वलया मायाप्रकृतिपृथिव्यण्डाभिधाः अण्डानां

CC-0 Kashmir Research Institute. Digitized by eGangotri

वलयाकारत्वात्तनौ शरीरे यस्यास्तदन्तःस्थितत्वात्तेषाम् । तदुक्तं श्रीमदभिनवगुप्ताचार्यपादैः—

निजशक्तिवैभवभरादण्डचतुष्टयमिदं विभागेन ।
शक्तिर्मायाप्रकृतिः पृथिवी चेति विभावितं प्रभुणा ॥ (प. सा. ४)

इति, तत्रान्तर्विश्वमिदं विचित्रतनुकरणभुवनसन्तानम् । इति च पराव्याप्तिश्च-यथा त्रीशिकायाम्—

सार्णेनाण्डत्रयं व्याप्तं त्रिशूलेन चतुर्थकम् ।
सर्वातीतं विसर्गेण पराव्याप्तिरुदाहृता ॥

इति, अथच त्रिवलयतनोर्वलित्रयोपेतमध्याया अध्युष्टवलयस्याप्युपलक्षणमेतत् । चित्रादपि चित्रमिदं यदेतादृशी अपरिच्छिन्नानन्दाधारशक्तिस्वभावा स्वान्तःक्रोडीकृताशेषविश्वा च त्वं भक्तस्य ध्यानशीलिनो ध्यातुर्हृदि मनसि स्फुरसि परिच्छिन्नप्रकाशानन्दाध्येयाकृतिभावेन प्रकाशसे इत्यर्थः । अत्यल्पदेशे महतो मानमाश्चर्यकरम् । "तमेव भान्तमनुभाति सर्वमिति" एतस्यैवानन्दस्यान्यानीति, विश्वं प्रतिष्ठितं यस्यां तस्याः कुत्र प्रतिष्ठितिः, इत्यादिश्रुतिस्मृतिवचनविरोधात् । यद्वा त्वं भक्तस्य हृदि स्फुरसि पारिमित्यादिनावभासि किमित्येतच्चित्रम् अत्र काक्वा किमाक्षेपः । परिमिताकारा न भासीत्यर्थः । यद्वा हृदि चिदाकाशे समावेशिनो भक्तस्य त्वं चित्रं भवति यथा तथा स्फुरसि तदीयदेहाद्याभासनिमज्जनपुरः सरं स्वात्मतादात्म्योन्मज्जनेनैकरसी भवसीत्यर्थः तदुक्तं विज्ञानभैरवे—

हृद्याकाशे निलीनाक्षः पद्मसम्पुटमध्यगः ।
अनन्यचेताः सुभगे ! परं सौभाग्यमाप्नुयात् ॥ (श्लो. ४८)

इति परं सौभाग्यं विश्वेश्वरतापत्तिरिति श्रीक्षेमराज इति ॥२९॥

CC-0 Kashmir Research Institute. Digitized by eGangotri

अधुना सार्वात्म्येन परामर्शशालिनां शाक्तसमावेशभाजां जगत्क्षोभजनन-लक्षणां सिद्धिमाह—

**पुरः पश्चादन्तर्बहिरपरिमेयं परिमितं**
**परं स्थूलं सूक्ष्मं सकलमकलं गुह्यमगुहम् ।**
**दवीयो नेदीयः सदसदिति विश्वं भगवतीं**
**सदा पश्यन्त्याज्ञां वहसि भुवनक्षोभजननीम् ।।३०।।**

पुरः पुरस्ताद् दिशि देशे काले च अधिकरणे पूर्वादीनां दिग्देशकाल-वृत्त्यवस्थादिप्रत्ययस्मरणात् । यद्वस्तु अतीतवर्तमानसंभाव्यत्वेन भासमानम-पादानाद्वा दिगादेर्यद्भेदेनावभासमानं देशादिवृत्तिकं प्रातिपदिकमात्रं वा, तद्-भगवतीस्वरूपमेवतत्तद्रूपतया विजृम्भते । "ब्रह्मेदममृतं पुरस्तादिति" श्रुतेः । एवं वसत्यागतरमणीयादिपदविशिष्टः सप्तम्यादिविभक्तिमदुदाहरणक्रमोऽभ्यूह्यः । तथा पश्चादपरस्मिन् दिग्देशाशादावपरस्मात्तथाविधादपरं वा तादृशं प्रातिपदि-कमात्रं शाक्तस्फारमयं एतदुत्तराद्युपलक्षणं, तथा च श्रुतेः—"ब्रह्मपश्चाद् ब्रह्म-दक्षिणतश्चोत्तरेण । अधश्चोर्ध्वं च प्रसृतम्" (मुंड २-२-११) इति । तथा शून्यादिवाह्यवेद्यापेक्षयान्तरभ्यन्तरं प्रमातृरूपं तदवभासकत्वात् । तथान्तः प्रमा-त्रपेक्षया बहिरेषणीयकार्यरूपं "तदन्तरस्य सर्वस्य तदुसर्वस्यास्य बाह्यतः" इति श्रुतेः (ईशा ५) तथा परिमातुमशक्यमपरिमेयमपरिच्छेद्यं आकाशवाय्वात्मभूत-द्वयं परिमितं परिच्छिन्नं पृथिव्यप्तेजोरूपभूतत्रयम् । यद्वा परिमेयमहन्ताविमृ-श्यं परिमितमिदन्तापरिच्छेद्यं जडाजडलक्षणमित्यर्थः तदुक्तम्—

परिच्छिन्नप्रकाशत्वं जडस्य किललक्षणम् ।
जडाद्विलक्षणो बोधो यतो न परिमीयते ।। (तं.आ.३श्लो.१०१-१०२)

इति, तथा परं सूक्ष्मं स्थूलमिति यद्वाच्यवाचकात्मषडध्वजातं स्थूल-

CC-0 Kashmir Research Institute. Digitized by eGangotri

सूक्ष्मपरभावेन त्रिविधं तत्र भुवनतत्त्वकलास्वरूपं वाच्यम् ।
मन्त्रपदवर्णात्मकं वाचकमिति षड्विधत्वम् । तदुक्तम्—

तत्र वाचकवाच्यात्मस्पन्दयोरेकशः प्रभोः ।
स्थूलसूक्ष्मपराभासक्रमयोःषड्विधाध्वता ॥

इति, तथा विरूपाक्षपञ्चाशिकायाम्—

यस्य विमर्शकरणो मन्त्रपदार्णात्मकस्त्रिधा शब्दः ।
पुरतत्त्वकलात्मार्थो धर्मिण इत्थं प्रकाशस्य ॥

इत्येतत्प्राग्वितत्य प्रदर्शितम । अथवा परादिशब्देनावरणात्मकोशत्रितयमाणवादिमलत्रयसतत्त्वमभिधीयते । तत्र चित्स्वभावतापहस्तनेन परमावरणमाणवो मलः । भेदमयज्ञत्वकर्तृत्वप्रथनेन सूक्ष्ममावरणं मायीयो मलः । प्राधानिकदेहात्मतया स्थूलमावरणं कार्मो मलः । तदुक्तम्—

परमावरणं मल इहसूक्ष्मं मायादिकञ्चुकं स्थूलम् ।
बाह्यं विग्रहरूपं कोशत्रयवेष्टितो ह्यात्मा ॥

इति, यद्वा परं कारणात्मकं सूक्ष्मं पुर्यष्टकरूपं स्थूलं देहात्मकमिति शरीरत्रयं परादिशब्देनोच्यते । अथ च परादिशब्देन त्रिधोपायजालं ज्ञानयोगमन्त्रात्मकं शाम्भवशाक्ताणवसंज्ञकं वा ज्ञानमुच्यते । तेषां लक्षणानि यथा—

तत्राद्ये स्वपरामर्शे निर्विकल्पैकधामनि ।
यत्स्फुरेत्प्रकटं साक्षात्तदिच्छाख्यं प्रकीर्तितम् ॥ (तं.आ.१.श्लो.१४६)

इच्छाख्यमव्यवहितेच्छाशक्तिस्फाररूपं शाम्भवज्ञानमित्यर्थः । तथा—

भूयो भूयो विकल्पांशनिश्चयक्रमचर्चनात् ।
यत्परामर्शमभ्येति ज्ञानोपायं तु तद्विदुः ॥ (तं.आ.१.श्लो.१४८)

इति ज्ञानशक्तिस्फारात्मकं शाक्तं ज्ञानमित्यर्थः । तथा—

CC-0 Kashmir Research Institute. Digitized by eGangotri

तत्तु तत्कल्पनाक्लृप्तबहिर्भूतार्थसाधनम् ।

क्रियोपायं तदाम्नातं भेदो नात्रापवर्गगः ॥ (तं. आ. १. श्लो. १४९)

इति, क्रियाशक्तिस्फारात्मकमाणवं ज्ञानमित्यर्थः । अथवा परं सात्त्विकं सूक्ष्मं राजसं स्थूलं तामसं ज्ञानम् । तदुक्तं गीतासु—

सर्वभूतेषु येनैकं भावमक्षयमीक्षते ।

अविभक्तं विभक्तेषु तज्ज्ञानंविद्धि सात्त्विकम् ॥ (१८-२०)

इत्यादि, तथा सह कुलेन शाक्तप्रसरात्मना विश्वेन वर्तते इति सकुलं शक्तिलक्षणं कुलेश्वरीरूपं तत्सृष्टिसंहारक्षममित्यर्थः । तदुक्तम्—

मेयमानमितिलक्षणं कुलं प्रान्ततो व्रजति यत्र विश्रमम् । इति ।

यत्रोदितमिदं चित्रं विश्वं यत्रास्तमेति च ।

तत्कुलं विद्धि सर्वज्ञ ! शिवशक्तिविवर्जितम् ॥

इत्यादिना लक्षितं शिवशक्त्यादिप्रतिनियतव्यपदेशासहिष्णु पूर्णपरसंवित्प्रकाशात्मानाख्यं तत्त्वं च कुलं तस्माद्यदन्यदवभासितं तदकुलं शिवलक्षणं प्रकाशैकात्म्येन प्रकाशमानं कुलेश्वराख्यम् । तथा गुह्यं गुहायां हृद्रूपायां परमे व्योम्नि वा भवमात्मतत्त्वम्, "आत्मास्य जन्तो निहितो गुहायामि"ति श्रुतेः । (न. उ. ता. १-३, महाना ८-१) "गुहां प्रविश्य तिष्ठन्तं यो भूतेभिर्व्यपश्यत । एतद्वैतदिति (कठो. ४-६) च । "अन्तःशरीरे ज्योतिर्मयो हि शुभ्रो यं पश्यन्ति यतयः क्षीणदोषाः" ।

इति । पूर्णपरिमितप्रमातृरूपयोर्जीवात्मपरमात्मनोरैक्यविज्ञानं वा ।

ऋतं पिबन्तौ सुकृतस्य लोके

गुहां प्रविष्टौ परमे परार्ध्ये ॥ (कठो. ३-१)

इति ।

CC-0 Kashmir Research Institute. Digitized by eGangotri

यो वेद निहितं गुहायां परमे व्योमन्नित्यादिश्रुतिभ्यः (तैत्ति. २-१-१)। रहस्योपासनमपि गुह्यं शक्तिपातवतामेव प्रकाशनीयत्वात् यद्वा गुहायां कर्मणोऽवस्थितिस्थानलक्षणायां मायायां भवमुत्पन्नं कलादिक्षित्यन्तं तत्त्वजातं भेदप्रथात्मसंवेदनं वा। गुह्यं पारमार्थिकं परमरहस्यानुत्तरज्ञानमविच्छिन्नगुरुपारम्पर्यक्रमागतं रहस्यं वा, "गुह्यं ब्रह्म सनातनमिति" श्रुतेः (कठो. ५-६-७)। त्रीशिकायामपि—

एतद्गुह्यं महागुह्यं कथयस्व मम प्रभोः। (श्लो. २)

इति। तथा गुहातो मायातत्त्वाद्यदन्यत्तदगुहं शुद्धविद्याद्युचिताभेदविमर्शमयं संवेदनमपेतमलाद्यावरणरूपत्वान्निरावरणम्। तदुक्तं गुप्तपादैः—

निरावरणमाभाति भात्यावृतनिजात्मकः।

इति, अथ च गुह्यं गुप्ततरादियोगिनीरश्मिवृन्दं अगुहं बाह्यं प्रकटाख्ययोगिनीरश्मिवृन्दं श्रीमहात्रिपुरसुन्दरीचक्रस्थावरणनिविष्टम्। तथा दवीयोऽतिशयेन दूरं देशकालादिव्यवहितत्वात्। नेदेयोऽन्तिकतमं देशाद्यव्यवहितत्वात्। "तदु दूरे तद्वन्तिके" तति श्रुतेः तथा—'दूरात्सुदूरे तदिहान्तिके च पश्यत्स्विहैव निहितं गुहायां' (मुण्ड. ३-१-७) इत्यादि श्रुतेः। तथा सद्-द्भावरूपं सदिति दृश्यं स्थूलमसदृश्यं सूक्ष्मं "अणोरणीयान्महतो महीयानिति"(कठो. २-२०) श्रुतेः यद्गीतं "सदसच्चाहमर्जुन" (भ.गी. ९-१९) इति यद्वा सदितिरूपवद्वस्तु मूर्तं असदिति अमूर्तं वाय्वाकाशादिकम्। अथ च सदिति पञ्चीकृतपञ्चमहाभूतात्मा स्थूलः प्रपञ्चः। असदित्यपञ्चीकृतपञ्चमहाभूतात्मा सूक्ष्मः प्रपञ्चः।

सदितित्रैकालिकबाधानिर्विषयकं ब्रह्म, असदितिमिथ्याप्रपञ्चः तस्याद्यन्तयोरसत्त्वान्मध्ये नामरूपाध्यासात् रज्जुभुजङ्गवद् भ्रान्त्या भासमानस्यापि बाधितत्वादिति वा सदसद्भ्यामुच्यते।

"द्वे वाव ब्रह्मणो रूपे मूर्तञ्चामूर्तमेव च" (बृह. २-३-१ मैत्रा. ५-३)

CC-0 Kashmir Research Institute. Digitized by eGangotri

इति श्रुतेः। विष्णुपुराणेऽपि—

द्वे रूपे ब्रह्मणस्तस्य मूर्तं चामूर्तमेव च
क्षराक्षरस्वरूपे ते सर्वभूतेष्ववस्थिते ॥
अक्षरं ब्रह्म कूटस्थं क्षरं सर्वमिदं जगत् ।

इति, एवं विश्वमशेषं हे भगवति! श्रीमहात्रिपुरसुन्दरि! ये त्वद् ध्यानैकसमावेशरसास्वादपरवशा भक्ता ईमिति कामकलास्वरूपं सदा सर्वदा पश्यन्ति परामृशन्ति "असच्च सत् परमे व्योमन्" ब्रह्मेदं विश्वमिदं वरिष्ठमिति च श्रुतेः आज्ञां मातृचक्रशासनं भुवनेषु स्वर्लोकादिषु क्षोभजननीं तत्रस्थ-पुरुषाङ्गनानां संमोहादिजननी त्वं वहसि तेषां शरीरे संक्रामयसि येन तदाज्ञा-वशगाः सर्वे तदानुकूल्येन वर्तेरन्, इत्यर्थः ।
यदुक्तं ज्ञानार्णवे—

महाकामकलाध्यानयोगात्तु सुरवन्दिते ! ।
क्षोभयेत् स्वर्गभूर्लोकपातालतलयोषितः ॥ (प. १७ श्लो. ३०-३१)

इति, वामकेश्वरेऽपि—

यदैव जपते विद्यां महात्रिपुरसुन्दरीम् ।
तदैव मातृचक्राज्ञा सङ्क्रामत्यस्य विग्रहे ॥
सर्वासां सर्वसंस्थानां योगिनीनां भवेत्प्रियः । (प.४, श्लो. ५४-५५)

इत्यादि, मातृचक्रवत्तेषामप्याज्ञा त्रिषुलोकेष्वप्रतिहता सम्पद्यते । इत्यत्राशयः वास्तवं ज्ञानार्णवीयमाज्ञासंक्रमणाख्यं यद् देशिककृत्यं तत् प्राक् प्रदर्शितमितीहालं तत्प्रपञ्चेन, कामकलारहस्यं च यथा—

अग्रबिन्दु परिकल्पिताननां
मन्यबिन्दुरचितस्तनद्वयीम् ।

CC-0 Kashmir Research Institute. Digitized by eGangotri

नादबिन्दुरशनागुणास्पदां
नौमि ते परशिवे ! परां कलाम् ॥
एकारोर्ध्वगतो बिन्दुर्मुखं भानुरधोगतौ ।
स्तनौ दहनशीतांशू योनिर्हार्धकला भवेत् ॥
बिन्दुं संकल्प्य वक्त्रं तु तदधस्तात् कुचद्वयम् ।
तदधः सपरार्धं तु चिन्तयेत्तदधोमुखम् ॥ इति । ३० ॥

एवं समनन्तरोक्तामपरां सिद्धिं प्रदर्श्येदानीं परां सिद्धिं निरूपयन् केषाञ्चिदेवायातपरशक्तिपाततया कथञ्चिद्वेधदीक्षाप्राप्तौ परशक्त्यैकात्म्योपलम्भो विजृम्भते इत्याह—

**प्रविश्य स्वं मार्गं सहजदयया देशिकदृशा**
**षडध्वध्वान्तौघच्छिदुरगणनातीतकरुणाम् ।**
**परानन्दाकारां सपदि शिवयन्तीमपि* तनुं**
**स्वमात्मानं धन्याश्चिरमुपलभन्ते भगवतीम् ॥३१॥**

धन्याः परशक्तिपातपवित्रितहृदयाश्चरमजन्मतया धनं भगवद्भक्तिसौभाग्यरूपं लब्धारो जनाः सहजदयया निसर्गकरुणामय्यानुग्राह्यजनानुजिघृक्षैकसारत्वाद् देशिकस्य कुलमार्गाचार्यस्य सद्गुरोर्दृशा शक्तिपाताविनाभूतकटाक्षपातेन तत्प्रसादलब्धयोनिमुद्राबन्धनप्रकारेणाधोद्वाराकुञ्चनात् सुप्तां कुण्डलिनीं विषलतातन्तुतनीयसीं प्रबोध्य तया कमलजकमलमूलप्रदेशस्थसुषुम्णानाडीद्वारा स्वं मार्गं निजं चन्द्रार्कयोरसाधारणं ब्रह्मयानं प्रविश्य तत्र विद्युल्लतानिभामकुलपदादूर्ध्वं विसर्गस्थानं प्रत्युद्गच्छन्ती भगवती प्राणशक्तिरूपा "प्राक् संवित् प्राणे परिणता" इत्युक्तेः परा संविदेव सङ्कुचितप्रमातृभावमवबिभास-

---

*शिवतनुम् ।

CC-0 Kashmir Research Institute. Digitized by eGangotri

यिषुरप्राणाद्यचित्स्पन्दात्मतां गृहीत्वा विश्वं जडराशिमयमुद्‌गूर्णयन्ती सैव प्राणसम्बन्धात् कुण्डलिनीशक्त्यभिधेया। सच सम्बन्धो "नैसर्गिकः प्राण-सम्बन्ध" (शि.सू.३-४३) इति शिवसूत्रोक्त्या निसर्गात् स्वातन्त्र्यात्मनः स्व-भावादायातो नैसर्गिकः। यदुक्तं मैत्रायण्युपनिषदि—

"प्रजापतिर्वैकोऽग्रेऽतिष्ठत् स नारमतैकः स आत्मानमभिध्यात्वा बह्वीः प्रजा असृजत ता अश्मेवाप्रबुद्धा अप्राणाः स्थाणुरिव तिष्ठमाना अपश्यत्। स नारमत सो मन्यतैतासां प्रतिबोधनायाभ्यन्तरं विशामीति स वायुरिवात्मानं कृत्वाभ्यन्तरं प्राविशत्। स एको नाशकत् स पञ्चधात्मानं विभज्योच्यते स यः प्राणोऽपानः समान उदानो व्यान इति (२-६)" मोक्षोपायेषु च—

देहेऽस्मिन् देहनाडीषु वातः स्फुरति योऽभितः।
खदास्विव भुवो वारि स प्राण इतिकीर्तितः॥
तस्य स्पन्दवशादन्तः क्रियावैचित्र्यमीयुषः।
अपानादीनि नामानि कल्पितानि कृतात्मभिः॥
अन्तः प्राणपरिस्पन्दात् संकल्पकलनोन्मुखी।
संवित् संजायते चैषा तच्चित्तं विद्धि राघव!॥
प्राणस्पन्दं विदुःस्पन्दं तत् स्पन्दादेव संविदः!
चक्रावर्तविधायिन्यो जल स्पन्दादिवोर्मयः।

इति। श्रीतन्त्रालोके—

व्यापकोऽपिशिवः स्वेच्छाक्लृप्तसङ्कोचमुद्रणात्।
विचित्रफलकर्मौघवशात्तत्तच्छरीरभाक्॥
स वाय्वात्मा दृढे तस्मिन् देहयन्त्रे चिदात्मना।
प्रेर्यमाणो विचरति भस्त्रायन्त्रगवायुवत्॥
क्षये तु कर्मणां तेषां देहयन्त्रेऽन्यथागते।

CC-0 Kashmir Research Institute. Digitized by eGangotri

प्राणयन्त्रं विघटते देहः स्यात् कुड्यवत्ततः ॥ (आ. २८, श्लो.-२१७-२२०-२२७)

इति, तामेव कुण्डलिनीं शक्तिं सर्वप्राणिजीवनात्मिकां चित्कलां षडध्वानः षडाधारग्रन्थयस्तद्रूपस्य ध्वान्तौघस्य षडध्वात्मनः समनान्तपाशजालस्य वा।
छिदुरा छेदनशीला तदुक्तम्—

अमुना विधिना मुहुःकृतेन
क्रमशः कम्बुनि मारुतस्ततोऽसौ।
अजपङ्कजमूलदेशमार्ग-
प्रणयीं ग्रन्थिविभेदनं करोति ॥

इति। तथा तत एव ध्वान्तौघस्य च्छेदनाद्गणनां संख्यामतीतातिक्रान्ता करुणा दया यस्यास्तां प्रकृत्यानुपचरितकारुण्यैकमूर्तिमित्यर्थः तथा निजानन्दादिभूमिकाभ्यः परो जगदानन्दभरिततया निरतिशयः पूर्णाहन्तानुसन्धानात्मकस्वात्मविश्रान्तिसतत्त्वो य आनन्दः सुखं स एवाकारःस्वरूपं यस्याः। तदुक्तम्-'पूर्णत्वादहमित्यन्तर्ज्ञानमानन्द उच्यते।' यद्वा—परस्मिन् सर्वोत्कृष्टे व्योमाम्भोजे परमविसर्गानन्दस्थानसङ्गत्या आनन्दाकारां महाह्लादरसमयीं तत्र सपदि सङ्गतिसमकालमेव तनुं स्वरूपं शिवयन्तीं स्वच्छस्वतन्त्रप्रकाशैकघनाकुलाख्यशिवसामरस्यमापादयन्तीमेवंविधामुक्तरूपां भगवतीं चिरं बहुजन्मावसाने "बहूनां जन्मनामन्ते"इत्याद्युक्त्या स्वमात्मानमुपलभन्ते संवेदयन्ते स्वात्मैक्येनानुभवन्ति येन जीवतामेव तेषां मुक्तिस्तदुक्तं श्रीनेत्रतन्त्रे—

निमेषोन्मेषमात्रेण यदि चैवोपलभ्यते।
*तदाप्रभृतिमुक्तोऽसौ न पुनर्जन्म चाप्नुयात् ॥ (अधि. ६, श्लो. ८-९)

---

*ततः इति मु. पु. पाठः।

CC-0 Kashmir Research Institute. Digitized by eGangotri

इति । श्रीनिशाचारेऽपि—

विकल्पक्षीणचित्तस्तु आत्मानं शिवमव्ययम् ।
पश्यते भावशुद्ध्या यो जीवन्मुक्तो न संशयः ॥

इति, "तथा भूयः स्यात् प्रतिमीलनमि"ति (शि.सू.३-४५) शिवसूत्रोक्तस्थित्या समनावधि निखिलग्रन्थ्यात्मकपाशतिमिरोच्छेदनादुन्मनाशक्त्यासादने औन्मनसपरमशिवात्मताप्रत्यापत्तिर्योगिनः सम्पद्यते तदुक्तं स्वच्छन्दतन्त्रे—

उन्मनापरतो देवि तत्रात्मानं नियोजयेत् ।
तस्मिन् युक्तस्ततो ह्यात्मा तन्मयश्च प्रजायते ॥ (प. ४, श्लो. ३३२)

इति, तथा—

उद्बोधितो यथा वह्निर्निर्मलोऽतीव भास्वरः ।
न भूयः प्रविशेत् कोष्ठे तथात्माध्वन उदाहृतः ॥
मलकर्मकलाद्यैस्तु निर्मलो विगतक्लमः ।
तत्रस्थोऽपि न बाध्येत यतोऽतीव सुनिर्मलः ॥

इति, इत्थं शक्तिद्वारैवोपायभूतेनोपेयस्य शिवस्वरूपस्य प्रत्यभिज्ञानादिश्रवणात् तदुक्तं विज्ञानभैरवे—

शक्त्यवस्था प्रविष्टस्य निर्विभागेन भावनात्* ।
तदासौ शिवरूपीस्याच्छैवीमुखमिहोच्यते ॥
यथालोकेन दीपस्य किरणैर्भास्करस्य वा ।
ज्ञायते दिग्विभागादि तद्वच्छक्त्या शिवः प्रिये ! ॥ (वि. भै., श्लो. २०-२२) इति ॥३१॥

एवमनुभूतामेव भगवतीं सर्वविलयोदयविश्रान्तिधामतया परामृशन् अविद्यादे-

---

*भावना इति मु. पु. पाठः ।

CC-0 Kashmir Research Institute. Digitized by eGangotri

जगत्कारणभावनिरसनं ध्वनयति—

**मयूखाः पूष्णीव ज्वलन इव तद्दीप्तिकणिकाः**
**पयोधौ कल्लोलप्रतिहतमहिम्नीव पृषतः ।**
**उदेत्योदेत्याम्ब ! त्वयि सह निजैस्तात्त्विककुलै-**
**र्भजन्ते तत्त्वौघाः प्रशममनुकल्पं परवशाः ॥३२॥**

हे अम्ब ! तत्त्वौघास्तत्त्वानां सदाशिवादिक्षित्यन्तानां पञ्चत्रिंशत्संख्यानामोघाः प्रसराः समूहाश्चोदेत्योदत्यार्थात्त्वत्तस्तद्विलयोदयकारणात् सिसृक्षालक्षणविश्वोन्मेषावस्थायां पौनः पुन्येन समुत्पद्य परवशा अस्वतन्त्राः प्रकाशपरतन्त्रत्वात् तदुक्तम्—

तथाहि जडभूतानां प्रतिष्ठा जीवदाश्रया ।

इति, 'एवमात्मन्यसत्कल्पाः प्रकाशस्यैव सन्त्यमी जडाः' (श्लो.१३)इत्यजडप्रमातृसिद्धावपि अनुकल्पं प्रतिप्रलयं सञ्जिहीर्षालक्षणविश्वनिमेषावस्थायां निजैः प्रातिस्विकैस्तात्त्विककुलैः शरीरभुवनादिनिवहैः सह सार्धं त्वयि मूलकारणे परस्यां चिच्छक्तौ प्रशमं लयं भजन्ते प्रलीयन्ते इत्यर्थः ।

तदुक्तमष्टावक्रगीतायाम्—

मय्यनन्ते चिदम्भोधावाश्चर्यं जीववीचयः ।
उद्यन्ति घ्नन्ति खेलन्ति प्रविशन्ति स्वभावतः ॥

इति, विज्ञानभैरवेऽपि—

जलस्येवोर्मयो वह्नेर्ज्वालाभङ्गयः प्रभारवेः ।
ममैव भैरवस्येता विश्वभङ्ग्यो विनिर्गताः* ॥ (श्लो. ११०)

---

*विभेदिताः इति मु. पु. पाठः ।

CC-0 Kashmir Research Institute. Digitized by eGangotri

इति, श्रीविरूपाक्षसिद्धैरपि—

स्वाङ्गेचिद्गगनात्मनि दुग्धोदनिभेस्वशक्तिलहरीणाम् ।
संभेदविभेदाभ्यां सृजति ध्वंसयति चैष जगत् ॥

इति, "इतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्तीति" श्रुतेः । आकल्पंस्थायिनो भावास्तत्त्वशब्देनोच्यन्ते शरीरभुवनादीनां तत्त्ववाचित्वाभावात् तदुक्तमभियुक्तैः—

आप्रलयं यत्तिष्ठति सर्वेषां भोगदायि भूतानाम् ।
तत्त्वमिति प्रोक्तं न शरीरघटादितत्त्वमतः ॥

इति,

यदेकमेव रूपं पृथिवीतत्त्वाद्यनेकैः प्रकारैरनुगामि भाति तदिदं पृथिव्यादितत्त्वमिति पारमेश्वरे दर्शने तत्त्वमित्युच्यते तदुक्तं तन्त्रालोके—

यान्युक्तानि पुराण्यमूनि विविधैर्भेदैर्यदेष्वन्वितं
भाति परं प्रकाशनिविडं देवः स एकः शिवः ।
तत्स्वातन्त्र्यवशात्* पुनःशिवपदाद्भेदे विभाते परं
परं यद्रूपं बहुधानुगामि तदिदं तत्त्वं विभोः शासने ॥
तथाहि कालसदनाद्वीरभद्रपुरान्तगम् ।
धृतिकाठिन्यगरिमाद्यवभासाद्धरात्मता ॥
एवं जलादितत्त्वेषु वाच्यं यावत् सदाशिवे । (आ ९, श्लो. २-४)

इति, श्रीमतङ्गशास्त्रादावपि—

पार्थिवाणुस्वरूपस्य विप्रकीर्णस्य सर्वतः ।
किं स्वरूपं स्वकं तत्र पृथिव्यास्तत्त्वसंज्ञितम् ॥
मृत्त्वमस्ति मृदस्तत्र येनासावुपदिश्यते ।
तत्त्वेभ्योऽप्यणुसंघेभ्यो विशिष्टमविनाश्यथ ॥

---

*रसाद् इति मु. पु. पाठः ।

CC-0 Kashmir Research Institute. Digitized by eGangotri

इत्यादि बहुधोक्तमलं तद्विस्तरेण। एतदेव मालोपमया हृदयङ्गमीभावाय निदर्शयति मयूखा इति पूष्णि सूर्ये मयूखा रश्मय इव ज्वलने वह्नौ तद्दीप्तिकणिकास्तज्ज्वालालेशा इव कल्लोलैर्महद्भिरूर्मिभिः प्रतिहितो विधृतो वीच्यादिप्रसरणपरावर्तनपरिभ्रमणादिलक्षणो महिमा वैभवं यस्य तस्मिन् पयोधौ जलधौ पृषतोऽप्कणा इव तत एव वीप्सया समुद्गम्य तत्रैव विलीयन्ते। अतः सदाशिवादेर्भूम्यन्तस्य विश्वस्य त्वमेव विलयोदयभूमिर्महाकारणात्मेति भावः। यद्गीतं भगवता—

प्रभवः प्रलयः स्थानं निधानं बीजमव्ययम्। (भ. गी., ९-१८)

इति तथा—

अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते।
अहमादिश्च मध्यं च भूतानामन्त एव च॥ (भ. गी., १०-८)

इति।

सर्वभूतानि कौन्तेय! प्रकृतिंयान्ति मामिकीम्।
कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम्॥ (भ. गी., ९-६)

इत्यादि।

अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा।
मत्तः परतरं नान्यद् किञ्चिदस्ति धनञ्जय!॥ (भ. गी., ७-६)

इति।

मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव। (भ. भी., ७-७)

इत्येतेन त्वत्तः किमपि प्रधानपरमाण्वादि स्वतन्त्रं कारणं नास्तीति कटाक्षयति यदाहुरन्ये—

कपिलः प्रधानमाह द्रव्यादीन् कणभुगस्य विश्वस्य।
कालं कारणमेके स्वभावमपरे जगुः कर्म॥

श्रुतिरपि—

CC-0 Kashmir Research Institute. Digitized by eGangotri

कालःस्वभावो नियतिर्यदृच्छाभूतानि योनिः पुरुष इतिचिन्त्याः ।
संयोग एषां नत्वात्मभावादात्माप्यनीशः सुखदुःखहेतोरिति (श्वेता. १-१२ ना. प. ९-१) ॥३२॥

एवमुक्तस्वरूपायाः परस्याःशक्तेःसाक्षाद्भक्तिमकुर्वाणानां फलव्यभिचारोऽन्तवत्त्वादिति सूचयंस्तत्रैव देवतान्तरपर्यायातिदेशविकल्पानाह—

**विधुर्विष्णुर्ब्रह्मा प्रकृतिरणुरात्मा दिनकरः**
**स्वभावो जैनेन्द्रः सुगतमुनिराकाशमनिलः ।**
**शिवः शक्तिश्चेति श्रुतिविषयतां तामुपगतां**
**विकल्पैरेभिस्त्वामभिदधति सन्तो भगवतीम् ॥३३॥**

अम्बेति पूर्वोक्तश्लोकात् सम्बोधनं ग्राह्यम् । सन्तस्तत्तद्दर्शनसिद्धान्तज्ञा विद्वांसः श्रुतिविषयतां तत्तद्दर्शनशास्त्रप्रतिपाद्यतामुपगतां प्राप्तां तां सर्वलोकप्रसिद्धामेभिर्विकल्पैर्वक्ष्यमाणैर्विविधनामकल्पनाभिर्भगवतीं परां चिच्छक्तिमभिदधति वदन्ति । विकल्पो नाम निर्वस्तुविषयकं शब्दजन्यं ज्ञानम् ।
तथा च पतञ्जलिः—

शब्दमात्रानुपाती* वस्तुशून्यो विकल्पः । (यो. द. पाद १ सू. ९)

एतेन विकल्पानामसत्यत्वात्तत्तद्दर्शनोपासनीयतत्तद्देवतारूपेण परदेवतास्वसंविदेव सर्वैः समर्चनीयेति सूच्यते कतमे ते विकल्पा इत्याह—विधुरिति "शैववैष्णवदौर्गार्कगाणपत्येन्दुसंभवैः" इति कुलार्णवोक्तदृशा जैनदर्शनस्येन्दुसंभवात्तदनुयायिन इन्दुरेव बन्धमोक्षणहेतुरुपास्य इति कल्पयन्ति । वासुदेवाख्यो विष्णुरेव परप्रकृतिरूपः, तत एव सङ्कर्षणाद्यभिधचतुर्व्यूहसर्गः प्रवर्तते

---

*शब्दज्ञानानुपातीति मु. पु. पाठः ।

CC-0 Kashmir Research Institute. Digitized by eGangotri

तद्वाराधनादेव बन्धनान्मुच्यते, स एव विश्वोपादानं कर्ता चेति । तदुक्तम्—

वासुदेवः परं ब्रह्म कल्याणगुणसंयुतः ।
भुवनानामुपादानं कर्ता जीवनियामकः ॥

इति । परमिति पूर्णषड्गुणं कल्याणगुण इति अपहतपाप्मत्वादयः । "सोऽपहतपाप्मा विरजो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्प"इति श्रुतेः । जीवनियामक इत्यन्तर्यामी "य आत्मनि तिष्ठन्नात्मानमन्तरो यमयति" (श. प १४-५-३०) इति श्रुतेः तत्र चतुर्व्यूहोपासनायां पूर्वपूर्वोपासनया पुरुषार्थप्रतिबन्धकदुरितक्षये सति उत्तरोत्तरोपासनायामधिकारः सम्पद्यते । तदुक्तम्—

वासुदेवः स्वभक्तेषु वात्सल्यात्तत्तदीहितम् ।
अधिकार्यानुगुण्येन प्रयच्छति फलं बहु ॥
तदर्थं लीलया स्वीयाः पञ्चमूर्तीः करोति वै ।
प्रतिमादिकमर्चा स्यादवतारास्तु वैभवाः ॥
सङ्कर्षणो वासुदेवः प्रद्युम्नश्चानिरुद्धकः ।
व्यूहश्चतुर्विधो ज्ञेयः सूक्ष्मं संपूर्णषड्गुणम् ॥
तदेव वासुदेवाख्यं परं ब्रह्म निगद्यते ।
अन्तर्यामी जीवसंस्थो जीवप्रेरक ईरितः ॥
य आत्मनीति वेदान्त वाक्य जालैर्निरूपितः ।
अर्चोपासनया क्षिप्ते कल्मषेऽधिकृतो भवेत् ॥
विभवोपासने पश्चाद् व्यूहोपास्तौ ततः परम् ।
सूक्ष्मे तदनुशक्तः स्यादन्तर्यामिणमीक्षितुम् ॥

इति । गरुडेऽपि—

CC-0 Kashmir Research Institute. Digitized by eGangotri

लोकानुग्रहकृद्विष्णुः सर्वदुष्टविनाशनः ।
वासुदेवस्वरूपेण तथा सङ्कर्षणेन च ॥
प्रद्युम्नाख्यस्वरूपेणानिरुद्धाख्येन च स्थितः ।
नारायणस्वरूपेण पञ्चधा ह्यद्वयःस्थितः ॥

एवमुपासनाक्रमोपोद्बलितेन विज्ञानेन "न दृष्टेर्द्रष्टारं पश्येः" (बृह. २-४-२) इत्यादि श्रुतेः दर्शनादिकर्तुर्जीवस्य स्वमात्रावलोकनेऽपास्ते, अपुनरावृत्तिकं स्वधाम प्रयच्छति वासुदेवः । तदुक्तम्—

मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् ।
नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः ॥ (भ. गी. ८-१५)

इति ।

स्वभक्तं वासुदेवोऽपि संप्राप्यानन्दमव्ययम् ।
पुनरावृत्तिरहितं स्वीयं धाम प्रयच्छति ॥

इत्यलं विस्तरेण, इति पाञ्चरात्राणां समयः । तदनुयायिनस्तु वासुदेवाभिधं विष्णुमुपास्यं कल्पयन्ति । वैदिकास्तु "शास्त्रयोनित्वात्" (अ. १, पा. १ अधि३, सू. ३) इतिब्रह्मसूत्रोक्त्या ।

ब्रह्मा देवानां प्रथमः सम्बभूव विश्वस्य कर्ता भुवनस्य गोप्ता ।
स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामथर्वाय ज्येष्ठपुत्राय प्राह ॥(यो.चू.,१०)

इति, तथा—"यस्य निःश्वसितं वेदाः" । तस्य महतो भूतस्य निःश्वसितं यदृग्वेदः" इत्यादिश्रुतिभ्यश्च वैदिकमार्गानुयायिनः संसारान्मुक्तिकामा हिरण्यगर्भाख्यं ब्रह्माणमेवाराध्यं विकल्पयन्ति । हिरण्यगर्भः समवर्तताग्रे, इति श्रुतेः । तथा पौराणिका ब्रह्मशक्तिः प्रकृतिर्नाम देवतैवाभीप्सितभोगमोक्ष दायिनीति भगवतीं प्रकृतिनाम्ना विकल्पयन्ति । तदुक्तं ब्रह्माण्डे—

आदौ प्रादुरभूच्छक्तिर्ब्रह्मणो ध्यानयोगतः ।

CC-0 Kashmir Research Institute. Digitized by eGangotri

प्रकृतिर्नाम सा ख्याता देवानामिष्टसिद्धिदा ॥

यद्वा त्रिगुणसाम्यात्मिका प्रकृतिःस्वस्वभावाच्छादनक्रीडारूपा मायाख्या शक्तिः यदुक्तम्—

मायां तु प्रकृतिं विद्धि मायिनन्तु महेश्वरम् ।

तथा प्रत्यभिज्ञायाम—"तिरोधानकरी मायाभिधा पुनरिति" एवमनुत्तरत्रिकनयेनेयमेव शाम्भवी शक्तिरित्यपरपर्याया गीयते । यदुक्तं श्रीमहेश्वरानन्दपादैः—

ज्ञानक्रियामायानां गुणानां सत्त्वरजस्तमः स्वभावानाम् ।
अविभागावस्थायां तत्त्वं प्रकृतिरिति शाम्भवी शक्तिः ॥(म.म.श्लो.२०)

इति ।

यद्वा छान्दोग्योपनिषत्प्रसिद्धा तेजोऽबन्नलक्षणा प्रकृतिः या लोहितशुक्लकृष्णत्वेनाजात्वरोपणया कल्पनयाम्नायते । अजामेकां लोहितेत्यादिनेति । तथाणुरिति केचित् । अणुर्नाम चिदंशो जीवात्मसंज्ञको येन पुर्यष्टकादिशरीरमनुप्रविश्य तात्त्विकं चित्स्वभावं विस्मार्य तत्तादत्म्याध्यासेनाहमिदमिति परामृश्यते । "एषोऽणुरात्मा चेतसा वेदितव्यः" (मुं. ३-१-९) इति श्रुतेः । एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत । "स एष इह प्रविष्ट आनखाग्रेभ्यः । तदेव सृष्ट्वा तदनु प्राविक्षत् (बृह. १-४-७) । अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीत्यादिश्रुतिभ्यः । सिद्धपादैरपि—

ग्राहकमेकं त्वजडं जडमन्यद्ग्राह्यमस्य यो मनुते ।
मायाविमोहितात्मा बोध्यः सोऽणुर्भवी सद्भिः ॥

स्मृतिः—

कथं त्विदं साक्षदेहं मद्दते स्यादितीक्षणात् ।
विदार्य मूर्ध्नि सीमानं प्रविष्टः संसरत्ययम् ॥

CC-0 Kashmir Research Institute. Digitized by eGangotri

श्रीतन्त्रालोकेऽपि—

देवःस्वतन्त्रश्चिद्रूपः प्रकाशात्मा स्वभावतः ।

रूपप्रच्छादनक्रीडायोगादणुरनेकधा ॥ (आ. १३ श्लो. १०३)

इति, एवमणुवादिनां विकल्पः । तथा केचित् सन्तः अहन्ताप्रत्ययवेद्य आत्मा पूर्णाक्षरब्रह्मलक्षण इति स्वदर्शनपरिभाषया विकल्पयन्ति । स चाहमनुभवगम्यतयैवावबोध्यते । तस्य "सत्यं ज्ञानमनन्तं ब्रह्म" (तैत्ति. २-१-१) इत्यादिश्रुतिभ्यो हि ब्रह्मसतावगमपूर्वं तद्भावः । अयमात्मा ब्रह्म (मांडू. २, नृ. पू. ४-२ नृसिंहो ८-५) तत्त्वमसि ब्रह्माहमस्मि, इति विद्वदनुभवाच्छ्रुतिसचिवात् प्रत्यभिज्ञायते ।

यदुक्तम्—

अहंधियात्मनःसिद्धेस्तस्यैव ब्रह्मभावतः ।

इति,

तथा दिनकर इति सौराः, सूर्यमण्डलान्तर्निविष्टब्रह्मोपासकाः कल्पयन्ति । तथा च श्रुतिः—

सूर्य आत्मा जगतस्तस्थुषश्चेति, (ऐत. २-३-३)

हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम् ।

तत्त्वं पूषन्नपावृणु सत्यधर्माय दृष्टये ॥ (बृह. ५-१५-१ मैत्रा. ६-३५)

"पूषन्नेकर्षे यम सूर्य प्राजापत्य व्यूह रश्मीन् समूह । तेजो यत्ते रूपं कल्याणतमं तत्ते पश्यामि योऽसावसौ पुरुषः सोऽहमस्मीति" महाराज्ञी च सौराणाभित नयेन विश्वावभासिका महती चिच्छक्तिःस्वप्रकाशत्वेनानन्यमुखप्रेक्षितया राजमानत्वात् । तदुक्तं स्वच्छन्दे—

ज्ञानशक्तिःप्रभोरेषा तपत्यादित्यविग्रहा । इति,

श्रीसाम्बेनापि— .... .... .... .... .... .... .... .... .... .... ... ...

CC-0 Kashmir Research Institute. Digitized by eGangotri

.... .... .... .... .... .... .... .... ... ... ... ... ... .... .... ...

.... .... .... .... .... .... .... .... .... .... .... .... .... .... इति,

तथा परे सन्तः स्वभावो मायाविद्याद्यपरपर्यायः सत्ये चिदानन्दघने ब्रह्मणि विवर्तात्मना जगत्प्रपञ्चावभासनसामर्थ्यमिति कल्पयन्ति । देवी निष्ठा महिमाख्या शक्तिरेव स्वभावशब्देनोच्यते इत्यर्थः ।

स्वभावमेके कवयो वदन्ति कालं तथान्ये परिमुह्यमाणाः ।
देवस्यैष महिमा उ लोके येनेदं भ्राम्यते ब्रह्मचक्रम् ॥

इत्यादिश्रुतेः,

ते ध्यानयोगानुगता अपश्यन्
देवात्मशक्तिं स्वगुणैर्निगूढाम् ॥ इति, श्रुतेश्च

ब्राह्म्येऽपि—

दृश्यते च जगद्रूपमसत्यं सत्यवन्मृषा ।
तोयवन्मृगतृष्णा तु यथामरुमरीचिका ॥
रौप्यवत् कीकसम्भूतं कीकसं शुक्तिरेव च ।
सर्पवद्रज्जुखण्डश्च निशायां वेश्ममध्यगः ॥

इत्यादि,

द्वैतभ्रान्तिरविद्याख्या विकल्पो न च तत्तथा ।

इत्यन्तम्, तथा—

व्योम्नि वज्रानलज्वालाकलापो विविधाकृतिः
आभाति विष्णौ सृष्टिश्च स्वभावो द्वैतविस्तरः ।

इत्यादि, तथा केचित्सन्तो हेमचन्द्रप्रभृतयोऽर्हन्मतानुसारिणो, जैनेन्द्रोऽर्हन्मुनिः कश्चित्परमात्मशब्दाभिधेयः सकलपदार्थसाक्षात्कारी प्रक्षीणप्रतिबन्धप्रत्ययत्वादिति समभिदधति । तदुक्तमाप्तनिश्चयालङ्कारे—

CC-0 Kashmir Research Institute. Digitized by eGangotri

सर्वज्ञो जितरागादिदोषस्त्रैलोक्यपूजितः।
यथास्थितार्थवादी च देवोऽर्हन् परमेश्वरः॥

इति, तथा परे विज्ञानवादिनो भगवच्छिष्या माध्यमिक-योगाचार-सौत्रान्तिक-वैभाषिक परिभाषया चतुर्धा भिद्यमानाः सुगतमुनिरार्यबुद्ध इति-विकल्पयन्ति। तेषां भिन्नत्वे मूलबीजप्रसिद्धिर्यथा—सर्वशून्यवादिनो हि माध्यमिकाः सर्वप्राणिसाधारण्येनानुभूयमानान् बाह्यानाभ्यन्तरान् पदार्थानपलपन्ति। योगाचारा बाह्यमपलप्यान्तरं ज्ञानं नापह्नुवते। आन्तरं ज्ञानमेव घटाद्याकारेण बाह्यवद् भातीत्युपगच्छन्ति। सौत्रान्तिकाः बाह्याभ्यन्तरार्थजातं वस्तुतःस्वीकुर्वाणा बाह्योऽर्थोऽनुमेय इत्याचक्षते। एवं वैभाषिकाः--बाह्योऽर्थः प्रत्यक्षः सर्वानुभवसिद्धत्वादिति मन्यन्ते। तदुक्तं विवेकविलासे—

चतुष्प्रास्थानिका बौद्धाः ख्याता वैभाषिकादयः।
अर्थो ज्ञानान्वितो वैभाषिकेण बहु मन्यते॥
सौत्रान्तिकेन प्रत्यक्षग्राह्योऽर्थो न बहिर्मतः।
आकारसहिता बुद्धिर्योगाचारस्य संमता॥
केवलां संविदं स्वस्थां मन्यन्ते मध्यमा पुनः।
रागादिज्ञानसन्तानवासनोच्छेदसंभवा।
चतुर्णामपि बौद्धानां मुक्तिरेषा प्रकीर्तिता॥

इति, तथा केचित् सन्तः—कं ब्रह्म खं ब्रह्मेति श्रुतेराकाशमिति सर्वोत्कृष्ट-परायणत्वात् परब्रह्माभिधानमभिवदन्ति। "आकाशस्तल्लिङ्गा"(१-१-८-२२) दिनि व्यासमुनिवचनाद् ब्रह्मपरत्वमाकाशस्यानन्त्याद्युज्यते। "सत्यं ज्ञानमनन्तं ब्रह्म"ति (तैति. २-१-१) श्रुतेः। किञ्चात्र सर्वोत्पादकत्वादिकमपि कर्म श्रूयते--"सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्त्याकाशे ह्येवैभ्योज्यायानाकाशः परायणमिति"। पर आत्माकाशो वै

CC-0 Kashmir Research Institute. Digitized by eGangotri

नामेत्यादिश्रुतेः। आकाशो वै नामरूपयोर्निर्वहिता यदेतदन्तरा तद् ब्रह्म स आत्मेति च।

"केचित्प्राणब्रह्मवादिनोऽनिल इति प्राणो ब्रह्मेति" श्रुत्या प्राण एवात्मेति वदन्ति। यथा प्राणनमेवाशेषमागूर्य तिष्ठति प्राणनं विना ब्रह्मरूपस्याकिञ्चित्वात्। यस्मिन् सति जीवनं यदपगमे न स्यादिति सविमर्शं शब्दब्रह्मेति प्रतिपन्नवन्तः।

केचन पत्यादित्रिपदार्थीवादिनो माहेश्वरा इत्थमाहुः—तनुकरणभुवनादयो भावाः सन्निवेशविशेषवन्तः कार्यत्वेनाभिमतास्तेषां च बुद्धिमत्कर्तृपूर्वकत्वेन कर्तुरनुमेयत्वम्। तेनानुमानवशात् परमेश्वरसिद्धिरुपपद्यते। तदुक्तम्—

विवादाध्यासितं सर्वं बुद्धिमत्कर्तृपूर्वकम्।
कार्यत्वादावयोःसिद्धं कार्यं कुम्भादिकं यथा॥

इति, ईश्वरसिद्धावपि—

तन्वादिबुद्धिमत्कर्तृ संनिवेशविशेषवत्।
घटवद्यदनेवं तन्नैवं खपरमाणुवत्॥ (श्लो. २)

इति, तत्र पतिः शिव उक्तः पशवो ह्यणवोऽर्थपञ्चकं पाशा इत्युक्तेः स एव पतिशब्दवाच्यः स्वतन्त्रः शिव इति प्रतिपादयन्ति मुक्ताणूनां विद्येश्वरादीनाञ्च शिवतुल्यत्वेऽपि तत्पारतन्त्र्यात् स्वातन्त्र्याभावः। परे शिवाद्वैतवादिनो महामाहेश्वराः साक्षात्कृताशेषशैवागमतत्त्वाः सर्वोत्तमत्रिकागमनयेनेत्थमाहुः शिवो नामानन्तसृष्ट्यादिचक्रैक्यमनुभवन् स्वहृदयोद्योगपरिस्पन्दसारः स्वतन्त्रः प्रमातृविशेषो विश्वोत्तीर्ण एवेत्युच्यते यदुक्तं यज्ञवैभवखण्डे—

एक एव शिवःसाक्षात् सत्यज्ञानादिलक्षणः।

CC-0 Kashmir Research Institute. Digitized by eGangotri

विकाररहितःशुद्धः स्वशक्त्या पञ्चधा स्थितः ॥

इति, सृष्ट्यादिपञ्चकृत्यशक्तिभिस्तस्यैव सद्योजातादिपञ्चरूपावभासित्वम् । श्री-सोमानन्दपादैरपि—

आत्मैव सर्वभावेषु स्फुरन्निर्वृतचिद्वपुः ।
अनिरुद्धेच्छाप्रसरः प्रसरद् दृक्क्रियः शिवः ॥ (शि. दृ. श्लो. २.)

इति, अन्यत्रापि—

तथा तथा दृश्यमानानां शक्तिसहस्राणामेकसंघट्टः ।
निजहृदयोद्यमरूपो भवति शिवो नाम परमस्वच्छन्दः ॥

इत्ययं तत्त्वसृष्टेराद्यः अनाश्रिताख्यप्रसरारम्भो महामायात्मिकायां समनाशक्तिभूमौ तच्छक्तिमारूढः पञ्चविधकृत्यकारी । अन्यस्तु परमशिवभट्टारकः स विश्वोत्तीर्णविश्वमय इत्यभिधीयते । यदभिप्रायेण प्रत्यभिज्ञायामुक्तम्—

सर्वथात्वन्तरालीनानन्तभावौघनिर्भरः
शिवश्चिदानन्दघनः परमाक्षरविग्रहः । (अ. ४ श्लो. १४)

इति, तथा तस्यैव विश्वोत्तीर्णस्य श्रीशिवनाथस्य "स्वशक्तिप्रचयोऽस्य विश्वम्" (शिव.सू.३-३०) इति शिवसूत्रोक्तस्थित्या, शक्तयोऽस्य जगत्कृत्स्नमिति श्रीमङ्गलाशास्त्रनीत्या च चिदानन्दशक्तिसमरसितेच्छाद्यनन्तशक्तिसन्तानपरिग्रहप्रवणतया प्रसरन्ती पञ्चत्रिंशत्तत्त्वस्फारमयी विश्वसृष्टिः शक्तिरित्युच्यते । यदाहुः—

पञ्चत्रिंशत्तत्त्वी शिवनाथस्य शक्तिरुक्तेयमिति । यद्वा शिव एव यदा "तदैक्षत बहुस्यां प्रजायेय" इत्याम्नायोक्तनीत्या स्वस्वातन्त्र्यात् स्वयमेव सहृदयस्पन्दनोद्गमनोपक्रमोच्छलदानन्दातिशयमनुभवति तदा सैवानन्दोद्रिक्तावस्था शक्तिस्वरूपेत्युच्यते । तदुक्तम्—

CC-0 Kashmir Research Institute. Digitized by eGangotri

स एव विश्वमेषितुं कर्तुं ज्ञातुं चोन्मुखोऽभवन् ।
शक्तिस्वभावः कथितो हृदयत्रिकोणमधुमांसलोल्लासः ॥

इत्येवमादिभिर्विकल्प्यमानैर्नामभिर्भगवत्येवोपास्यतया सद्भिस्तैस्तैर्व्यपदिष्टेति ।
यद्गीतम्—

येऽप्यन्यदेवताभक्ता यजन्ते श्रद्धयान्विताः ।
तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम् ॥ (भ. गी. ९-२३)
अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसाम् ।
देवान् देवयजो यान्ति मद्भक्ता यान्ति मामपि ॥ (भ. गी. ७-२३)

इत्येतेन साक्षान्मद्भजनस्यैवैकान्तिकस्थिरफललाभसम्पत्तिरित्यभ्यूह्यम् ॥३३॥

इदानीं संविदेकघनपरमार्थावभासमयीं तत्त्वदृष्टिं शुद्धविद्यापरामर्शरूढ्यावष्टभ्य स्वस्मिन् कामप्यलौकिकीं कृतार्थतामावेदयन् स्तौति—

**शिवस्त्वं शक्तिस्त्वं त्वमसि समया त्वं समयिनी**
**त्वमात्मा त्वं दीक्षा त्वमयमणिमादिर्गुणगणः ।**
**अविद्या त्वं विद्या त्वमसि निखिलं त्वं किमपरं**
**पृथक्तत्त्वं त्वत्तो भगवति ! न वीक्षामह इमे ॥३४॥**

हे भगवति ! स्वैश्वर्यातिशयोद्भावितविश्वभावव्याप्तिके ! अत एव विश्वमयतया त्वत्तः परसंविदात्मनः पृथग् भिन्नं तत्त्वं नीलादिवेद्यावभासात्मकं इमे वयं भवच्छक्तिपातपवित्रितहृदया न वीक्षामहे परामृशामः ।

इमे इत्यनुग्राह्यभक्तजनवर्गाभेदेन परामृश्यत्वात् सर्वनामनिर्देशः । परा संविदेव तथा तथा विश्वभाववैचित्र्येण स्वातन्त्र्यात् प्रस्फुरति । नहि तद्व्यतिरिक्ततयाऽणुमात्रमपि भातुं प्रगल्भेत । तद्भेदे ह्यचेत्यमानतया कस्याप्यस्फुर-

CC-0 Kashmir Research Institute. Digitized by eGangotri

णादसत्त्वं प्रसज्येत । चेत्यमानतायां प्रकाशैकात्म्यादिति निखिलतत्त्वभाववर्गः प्रकाशैकस्वभावः । तदुक्तमभिनवगुप्तपादैः—

ज्ञानाद्विभिन्नो नहिकश्चिदर्थस्तत्तत्कृतःसंविदि नास्तिभेदः ।
स्वयं प्रकाशाच्छतमैकधाम्नि प्रातिस्विकी नापि विभेदितास्याम् ॥

इति, तथा देविकाक्रमे—

तत्तद्रूपतया ज्ञानं बहिरन्तः प्रकाशते ।
ज्ञानादृते नार्थसत्ता ज्ञानरूपं ततो जगत् ॥
नहि ज्ञानादृते भावा केनचिद्विषयीकृताः ।
ज्ञानं तदात्मतां यातमेतस्मादवसीयते ॥

इति, उत्तमपुरुषप्रयोगेण वयमित्यस्मच्छब्दाक्षेपादिदमत्रावेद्यते । यदस्माकं दीक्षाद्यनुग्रहावसरे कर्तृकर्मकरणादिसाधनसामग्र्यनुकूलसंपत्तिर्या कथञ्चिदचिन्त्यानुग्रहवशात् संघटिता, तत्तद्रूपेण तदानीं त्वमेवास्मानुगृहीतवती, इतीदानीमहोऽनुग्रहपरिपाकेऽस्माभिरित्थं परामष्टुं पार्यते इत्याशयेन लिट्प्रयोगः । तदेवाह, शिवस्त्वमित्यादिना । अत्र शिवशब्देन दीक्षाकृद्गुरुर्विवक्षितस्तेनाचार्यमूर्तिमास्थाय शिव एव गुरुरूपेण दीक्ष्यान् दीक्षयन् स शिवरूपो गुरुस्त्वमसि । तदुक्तम्—

परिपक्वमलानेतानुत्सादनहेतुशक्तिपातेन
योजयति परे तत्त्वे स दीक्षयाचार्यमूर्तिस्थः ।

इति, कुलार्णवेऽपि—

अथवा निष्प्रपञ्चेन धाम्ना केनचिदीश्वरः ।
करोति गुरुरूपेण पशोः पाशविमोचनम् ॥

इति,

CC-0 Kashmir Research Institute. Digitized by eGangotri

शिवो दिव्याकृतिर्देवि ! नरदृग्गोचरो नहि ।
तस्माच्छ्रीगुरुरूपेण शिष्यान् रक्षति धार्मिकान् ॥

इति, तत्पादुकाप्रसादादेव शिष्यहृदब्जानां सङ्कोचमालिन्यापगमाद्विकासो जायते । तदुक्तम्—

दिवाकरकरासार विरहात् सङ्कुचत्कजम्
सत्स्वप्यन्यमहमहःस्वेति नैव विकासिताम् ॥
एवं शिष्यहृदम्भोजं गुरुपादविवर्जितम् ।
निमीलद्विकसत्येव पुनस्तत्पादपाततः ॥

इति, तथा शक्तिस्त्वं शक्तिशब्देनानुग्रहाख्यः शक्तिपातोऽभिधीयते । विना शक्तिपातं सद्गुरुसन्निधिर्दुर्घटःकुतः पुनर्दीक्षासंस्कार इति तद्रूपेणापि त्वमेव । तदुक्तम्—

रुद्रशक्तिसमाविष्टः स यियासुःशिवेच्छया ।
भुक्तिमुक्तिप्रसिद्ध्यर्थं नीयते सद्गुरुं प्रति ॥

इति मोक्षोपायेष्वपि—

यावन्नानुग्रहः साक्षाज्जायते परमेश्वरात् ।

इति, यद्वा

गुरोर्गुरुतराशक्तिर्गुरुवक्त्रगता भवेद् ।

इत्युक्तेः, शक्तिशब्देन तद्गता पाशस्तम्भनादिकारिणी शक्तिरुच्यते तदुक्तं कुलार्णवे—

पाशस्तम्भं वेधदीक्षां पशुग्रहणमेवच
त्रिविधं यो विजानाति स गुरुः कथितः प्रिये ! ॥ (उ.१३,श्लो.७९)

इति, तथान्तर्यागबहिर्यागादिरहस्याचारात्मा समयासि, अत्रान्तर्यागे

CC-0 Kashmir Research Institute. Digitized by eGangotri

योनिमुद्राबन्धनमन्त्रचैतन्यापादनादिरहश्चर्या बोध्या। समयाचाराणां दीक्षितैरवश्यानुष्ठेयत्वात्तल्लोपे प्रत्यवायश्रवणात् तदुक्तम्—

समयाचारलोपे तु क्रव्यादत्वं शतं समाः।

इति, अथ च आधारचक्रे शाम्भवान्वयक्रमोक्तपार्थिवरश्मिमुख्यदेवी समयाम्बाभिधा इति, यद्वा सिसाधयिषिताभीष्टमन्त्रस्य निष्प्रत्यूहतया फलाविर्भावायागमेषु समयाविद्यावतारः प्रसिद्धस्तद्रूपा। यद्वा क्रमनयोक्तस्थित्या सृष्ट्याद्यनाख्यसमयात्मा शोभनशुभावहविधिरूपा वा। तथा समयाःसृष्ट्याद्यनाख्यात्मानः सन्त्यस्याः समयिनी तदधीश्वरीत्वात् भासासमयारूपा समयेश्वरीत्यर्थः।

यदुक्तम्— इयं समयविद्यानां राजराजेश्वरीति—

अथ च समयाः पञ्चाम्नायात्मकसिद्धान्तशास्त्ररूपाः, समयिनी तत्तत्सिद्धान्तशास्त्रसम्प्रदायकारिणीति अथ च समयो भक्तरक्षायै प्रतिज्ञावचनमस्त्यस्या इति समयिनी। यथा महिषासुरवधानन्तरं स्तुवद्भ्यो देवेभ्यः प्रसन्ना देवी प्रतिशुश्राव यथा—

एवं यदा यदा बाधा दानवोत्था भविष्यति
तदा तदावतीर्याहं करिष्याम्यरिसंक्षयम्। (स. श. अ. ८, श्लो. ५५)

इति मार्कण्डीये। तथा त्वमात्मा दीक्ष्यशिष्यसम्बन्धि पुर्यष्टकाद्यभिमानवान् सङ्कुचितप्रमाता तस्यैव दीक्षयित्रा गुरुणा संस्कार्यत्वात्तद्रूपासि तदुक्तम्—संस्कार्यो हि सङ्कोचाभासतत्त्वापूर्णमन्यतात्मनेहाभिलाषशब्दोक्तेनाणवेण मलेन शुभाशुभवासनात्मना विविधजन्मायुर्भोगदेन कार्मेण तत्प्रभवेन च कञ्चुकपुर्यष्टकस्थूलभूतात्मनानाजातिकत्रिविधदेहतदाश्रयविचित्रभुवनभोक्तव्यार्थसार्थप्रतीतिभाजा मायामलेन च वलितः। यतः सर्वस्यैव सङ्कुचिताभिष्वङ्ग-

CC-0 Kashmir Research Institute. Digitized by eGangotri

मयोऽन्तरुल्लेखशताकीर्णः कृशगौरादिरूपोऽस्मीत्यत्रेदं जानामीत्यादिप्रतीतिसिद्ध एवायमर्थ इति सच दीक्षाज्ञानयोगचर्याभिः शोध्यमानः परमशिवात्मैक्यं समेति न च सिद्धान्तवादिवत् परमशिवात् कथञ्चिद्व्यतिरिक्तत्वं न्यूनत्वं वा तस्य पृथक् तत्त्वाभावात् तदुक्तं—

दीक्षाज्ञानादिना शोध्यमात्मानं चैव निर्मलम्
ये वदन्ति न चैवान्यं विन्दन्ति परमं शिवम् ।
त आत्मोपासकाः शैवेन गच्छन्ति परमं पदम् ।

श्रीस्वच्छन्देऽपि—

अविदित्वा परं तत्त्वं शिवत्वं कल्पितं तु यैः ।
त आत्मोपासकाः शैवेन गच्छन्ति परं पदम् ॥ (प.४,श्लो.३९१-९२)

यद्वा त्वमात्मा यजमानमूर्तिरुग्राख्यस्तथा दीक्षा तस्यैव यज्ञकर्तुर्यजमानात्मनो दीक्षितमूर्तेः परमशिवस्य पत्नी दीक्षासंज्ञा, यस्याः पुत्रः सन्तानाख्यस्तन्माता । यदुक्तं लिङ्गपुराणे—

यजमानात्मको देवो महादेवो बुधैः प्रभुः ।
उग्र इत्युच्यते सद्भिरीशानश्चेति चापरैः ॥
उग्राह्वयस्य देवस्य यजमानात्मनः प्रभोः ।
दीक्षा पत्नी बुधैः प्रोक्ता सन्तानाख्यस्तदात्मजः ॥

इति, वायुपुराणे च—

उग्रा तनुः सप्तमी या दीक्षितैर्ब्राह्मणैः सह ।
दीक्षा पत्नी स्मृता तस्य सन्तानः पुत्र उच्यते ॥

इति, तथा दानक्षेपणधर्मः पशुसंस्कारविशेषो दीक्षा । सा च दीक्ष्या-

CC-0 Kashmir Research Institute. Digitized by eGangotri

त्मनः शक्तिपातानुसारीति क्रियावर्णादिभेदवती संसारोद्बन्धनमोचिनी बहुधागमोक्ता। अयं संस्कार आणवादिपाशशक्तिप्रशमनपुरःसरं शिवत्वाभिव्यक्तियोग्यतात्मा पुंसः संस्कारो न तु बुद्ध्यादेः पाशानां प्रशमनमचिन्त्यप्रभावमचिन्त्यप्रभावमन्त्रशक्तिवशाद् बीजानामिव पुनः प्ररोहाधानासामर्थ्यम्। तत्राकस्मिकत्वेन सद्गुरुयियासया भक्त्यादिवशेन च शक्तिपातः पारमेश्वरो हेतुभावेनोन्नीयते।

तदुक्तं कुलार्णवे—

शक्तिपातानुसारेण शिष्योऽनुग्रहमर्हति।
यत्र शक्तिर्न पतति तत्र सिद्धिर्न जायते॥
क्रियावर्णकलास्पर्शवाग्दृङ्मानस संज्ञिका।
दीक्षा मोक्षप्रदा देवि! सप्तधा परिकीर्तिता॥
समयाख्याविशेषाख्या साधका पुत्रकाह्वया।
वेधका पूर्णसंज्ञा स्यादन्या निर्वाणसंज्ञिका॥(उल्ला.१४,श्लो.३८-४०)

इत्येतासां लक्षणानि तत्रैवोक्तानि। क्रियादिदीक्षाप्रसिद्धा एव तदन्तर्गताः स्पर्शदीक्षादय इत्थं भोगमोक्षोपायत्वं दीक्षाया एवागमेषु संवादितं तथैव हि शैवशास्त्राद्यधिकारोऽपि प्रसिद्धः तदुक्तं श्रीमदभिनवगुप्ताचार्यैः—

तत्र दीक्षैव भोगे च मुक्तौचायात्युपायताम्।

स्वयं संस्कारयोगाद्धेति, श्रीमालिनीविजयेऽपि—

नचाधिकारितादीक्षां विना योगेऽस्तिशाङ्करे।
न च योगाधिकारित्वमेकमेवानया भवेत्॥
अपि मन्त्राधिकारित्वं भुक्तिश्च शिवदीक्षया। (अधि.४,श्लो. ६-८)

इति, तथायं प्रत्यक्षेणोपलभ्यमानो दीक्षादिसंस्कारमहिमोपनततज्जन्या-

CC-0 Kashmir Research Institute. Digitized by eGangotri

वान्तरफलात्माऽणिमादिर्गुणगणो विभूतिपरिस्पन्दस्त्वमसि, एतत् सर्वज्ञत्वादेरुपलक्षणं तेन दीक्षाज्ञानाद्यवाप्तावपि यावत् प्राणादिप्राधान्यनिमज्जनपुरःसरं चित्प्राधान्योन्मज्जनेन सर्वज्ञत्वादिरूपा शक्तिर्न विकास्यते तावत् प्राप्तदीक्षस्यापि जीवन्मुक्तेरनासादितत्वात् बद्धत्वं नोपक्षीयते। तदुक्तम्—

यदा तु परमा शक्तिः सर्वज्ञादिगुणान्विता
आपादादिविकासिन्या न विकास्येत निर्मला॥
तावन्न निर्मलो ह्यात्मा बद्धःशैवे तदोच्यते।

इति।

एतेन त्वमेवाष्टैश्वर्याद्यधिष्ठातृयोगिनीस्वभावेत्यर्थः। एषां विस्तारः प्राग्वितत्य प्रपञ्चितः। तथा विद्या स्वस्वरूपाख्यातिलक्षणा परमेश्वरस्य स्वस्वभावविस्मरणकारिणी मायाशक्तिः। यया भ्रामितबुद्धयोऽनायातशक्तिपातत्वात् परिमितग्राहकभूमिमवलम्ब्यैव पशुप्रमातृत्वेन मलावृततया योनीः सञ्चरन्ति। तदुक्तम्—

परमं यत् स्वातन्त्र्यं दुर्घटसम्पादनं महेशस्य।
देवी मायाशक्तिः स्वात्मावरणंशिवस्यैतत्॥

इति, श्रूयते च—

'अन्धं तमः प्रविशन्तियेऽविद्यामुपासते' (बृह. ४-४-१०)

इति, एतेनाभक्तानां स्वरूपावरणकारिणीत्यर्थः। "माया चाविद्या च स्वयमेव भवतीतिश्रुतेः"(नृसिंहो९-३)। तथाविद्याध्वान्तहरणेन पूर्णाहंभावस्वभावप्रथनात्मिका शैवी शक्तिः, यया स्वात्मानं प्रत्यभिज्ञाय संसारबन्धनिर्मुक्ताः भूयःस्यात् प्रतिमीलनम्" (शि. सू. ३-४५) इति शिवसूत्रोक्त्या चिदानन्दघनपरमशिवस्वस्वभावमुक्तावरणनिरासात् प्रत्यापद्यन्ते। तदुक्तं प्रत्यभिज्ञायाम्—

एष प्रमाता मायान्धः संसारी कर्मबन्धनः।

CC-0 Kashmir Research Institute. Digitized by eGangotri

विद्याभिज्ञापितैश्वर्यश्चिद्घनो मुक्त उच्यते ॥ (३-२-२)

इत्येतेन स्वस्वरूपगोपन तत्प्रथनशक्तिभ्यां चरमकृत्यद्वयं विदधती भगवत्येव प्रस्फुरतीत्यर्थः । तदुभयात्मा त्वमसि । एवं दीक्षाद्यनुग्रहोपकरणसम्पदा त्वमेवावभासि । किं बहुना विस्तृतेन । क्रोडीकृतसर्वतत्त्वभावतनुकरणादिकं निखिलं विश्वं त्वमेव,

सर्वं खल्विदमेवाहं नान्यदस्ति सनातनम् ।

इति देवीभागवतवचनात् । सर्वं खल्विदंब्रह्मेतिश्रुतेः (त्रि.म.ला१-३) । किमपरं भिन्नंन किमपि त्वयैवाशेषस्य विश्वस्य स्वान्तर्गर्भीकरणात् । अतो भेदावभासाभावादन्तर्बहिः संविदैक्यपरामर्शात् स्वात्माभिन्नभगवती स्वरूपालोकनात्मालौकिकरसास्वादोल्लासः कामप्यानन्दभुवमुन्मज्जयतीत्यर्थः । तदुक्तमभिनवगुप्तपादैः—

त्वन्मयमेतदशेषमिदानीं भाति मम त्वदनुग्रहशक्त्या ।
त्वं च महेश ! सदैव ममात्मा स्वात्ममयं मम तेन समस्तम् ॥
(भै० स्तो, श्लो.२)

इति, अत्रान्येऽप्यर्थाःसम्भवन्तः पौनरुक्त्यविस्तरभयान्न वितन्यन्ते इति ॥३४॥

ननु शक्त्याश्रयं स्वतन्त्रं शक्तिमत्स्वरूपं किमिति न सेव्यमित्याशङ्क्य शक्तिव्यतिरेकेण तत् स्वभावोपलम्भ एव नास्ति इति सूचयंस्तयोरैकात्म्ये पर्यवसायित्वं दर्शयति—

**त्वया यो जानीते रचयति भवत्यैव सततं**
**त्वयैवेच्छत्यम्ब ! त्वमसि निखिला यस्य तनवः ।**
**गतः साम्यं शम्भुर्वहति परमं व्योम भवती**
**तथाप्येवं हित्वा विहरति शिवस्येतिकिमिदम् ॥३५॥**

CC-0 Kashmir Research Institute. Digitized by eGangotri

हे अम्ब ! यः शंभुः शुद्धसंविदेकस्फुरत्तात्माशेषसंविन्मरीचिचक्रेश्वरः

एवमेतदिदं वस्तु नान्यथेति सुनिश्चितम् ।
ज्ञापयन्ती जगत्यत्र ज्ञानशक्तिर्निगद्यते ॥

इत्याद्युक्त्या त्वया धीकरणस्थानीयया ज्ञानशक्तिस्वभावयान्तरा सूत्रितेच्छाक्रियया परापराख्यया जानीते नीलसुखादिवेद्यजातं स्वच्छे स्वात्मन्येव प्रकाशयति । इति सृष्ट्यादिक्रमस्यान्तरासूत्रितत्वमावेदितम् । तथा तत्तद्विश्ववैचित्र्यभूमिकाविस्तारं चिकीर्षुः,

एवंभूतमिदंवस्तु भवत्विति यदा पुनः ।
जाता तदैव तद्वस्तु कुर्वत्यत्रक्रियोच्यते ॥

इत्युक्तस्थित्यानन्तप्रमातृप्रमेयाद्याभासवैचित्र्यकारिण्या भगवत्यैव क्रियाशक्तिस्वभावयान्तरासूत्रतेच्छाज्ञानयापराख्यया विश्ववैचित्र्यं रचयति । विमलमुकुरवदनतिरिक्तत्वेऽप्यतिरिक्ततयेव बहिः कलयति । तथा विश्वं विश्वसिसृक्षुस्त्वयैव गृहीतेच्छाशक्तिस्वभावया,

या सा शक्तिर्जगद्धातुः कथिता समवायिनी ।
इच्छात्वं तस्य सा देवि ! सिसृक्षोः प्रतिपद्यते ॥

इत्युक्तलक्षणया गर्भीकृतोदेष्यच्छक्तिव्रातत्वात्पराख्यया जगत् स्रष्टुमिच्छति । वस्तुतस्त्वेकस्या एव शक्तेस्तथावभासनात् । तदुक्तम्—

*कृत्येषु देवि ! तव सृष्टमुखेषु नित्यं
स्वाभाविकेषु विसरत्सु यदुन्मुखत्वम् ।
इच्छेति तत्किल निरूपितमागमज्ञै-

---

*परासूक्तान्तर्गतमिदं पद्यम् ।

CC-0 Kashmir Research Institute. Digitized by eGangotri

जानासि येन विदधासि च तं तमर्थम् ॥

इति,

श्रीनेत्रतन्त्रे—

शक्त्या तु भगवान् सर्वं करोति हि विभुत्वतः ।
निमित्तकारणं देवो यथा सूर्यमणेः क्रिया ॥
उपादानं तु सा शक्तिः संक्षुब्धा समवायतः ।(अधि२१,श्लो.५०-५१)

इति, श्रीतन्त्रालोकेऽपि—

स्वातन्त्र्यमात्रसद्भावा या त्विच्छाशक्तिरैश्वरी ।
शिवस्य सैव करणं तया वेत्ति करोति च ॥ (आ. १० श्लो., १७)

इति, परिमितप्रमातृष्वपीयं निर्माणशक्तिः स्वप्नसङ्कल्पादौ स्वाभाविकी समुपलभ्यते एव तदुक्तं शिवसूत्रेषु–"करणशक्तिःस्वतोऽनुभवादिति" (३-३७) प्रत्यभिज्ञायामपि श्रीमदुत्पलाचार्यैः—

अत एव यथाभीष्टसमुल्लेखावभासनात् ।
ज्ञानक्रिये स्फुटे एव सिद्धे सर्वस्य जीवतः ॥ (१-६-११)

इति, सततमिति तिसृष्वेव क्रियास्वन्वेयम् । एवकारावन्ययोगव्यवच्छेदकौ । यस्य शम्भोरष्टमूर्तित्वान्निखिलास्तनवः क्षित्यादयोऽष्टौ मूर्तयस्त्वमसि, ताभिस्त्वमेव परिणतेत्यर्थः । तदुक्तम्—

क्ष्मावह्नियजमानार्कजलानिलनिशाकराः ।
खंचेति मूर्तयो ह्यष्टौ———————॥

इति । आचार्यपादैरपि—

"मनस्त्वं व्योमत्वं (३५)" इत्यादि सौन्दर्यलहर्यां दर्शितम् चतुःशत्यामपि—

CC-0 Kashmir Research Institute. Digitized by eGangotri

त्रिपुरा परमा शक्तिराद्या जाता महेश्वरी ।
स्थूल सूक्ष्मस्वभावेन त्रैलोक्योत्पत्तिमातृका ॥
कवलीकृतनिःशेष तत्त्वग्रामस्वरूपिणी ।
यस्यां परिणतायान्तु न किञ्चित्परिशिष्यते ॥

इति, एवं स्थूलसूक्ष्मात्मना शक्तिस्वभावे विश्वमयत्वे शिवस्य त्वमेव सर्वस्वमित्यभिधाय शिवैकस्वभावे विश्वोत्तीर्णत्वेऽपि तस्य तादवस्थ्यमेवेत्याह-- सशम्भुः यदा त्वया सह साम्यंसायुज्यलक्षणमभेदात्मनावस्थानं गतः प्राप्तःसन् तदा परमं व्योम वहति पराकाशात्मतामापद्यते । सामरस्यावस्थायां निःशेषतया बाह्याभासानां चिदादिपञ्चशक्तीनां चान्तर्विलापितत्वात् । तदुक्तमाचार्याभिनवगुप्तपादैः—

तत्रापि शक्त्या सततं स्वात्ममय्या महेश्वरः ।
यदा सङ्कटमासाद्य समापत्तिं परां व्रजेत् ॥
तदास्य परमं वक्त्रं विसर्गप्रसरास्पदम् ।
अनुत्तरविकासोद्यज्जगदानन्दसुन्दरम् ॥
भावि वक्त्रा*वियोगेन बीजं सर्वस्य यत् स्थितम् ।
हृत्स्पन्ददृक् परासार निर्नामोर्म्यादि तन्मतम् ॥
एतत्परं त्रिकं सूक्ष्मं सर्वशक्त्यविभागवत् ।
अत्र भाव समुल्लास शङ्कासङ्कोचविच्युतिः ॥
स्वानन्दलीनतामात्र मात्रिच्छाकर्मदृक् त्रयम् ।
तथा च गुरवः शैवदृष्टावित्थं न्यरूपयन् ॥
स यदास्ते चिदाह्लादमात्रानुभवतल्लयः ।
तदिच्छा तावती ज्ञानं तावत् तावत्क्रिया हि सा ॥

---

*वक्त्राविभागेन इति मु. पु. पाठः ।

CC-0 Kashmir Research Institute. Digitized by eGangotri

सुसूक्ष्मशक्तित्रितय सामरस्येन वर्तते । (मा.वि.वा.कां.१ श्लो१७-२४)
चिद्रूपाह्लादपरमस्तदाभिन्नो भवेदिति ॥

तत्रभवती एवं समनन्तरोक्तस्थूलसूक्ष्मात्मपरापराद्यात्मकं स्वभावं हित्वा विहायापि शिवस्य तथापि तादृशेन विश्वोत्तीर्णपरव्योमात्मना प्रकारेणापि परमाकाशवपुषा भासमाना विहरति, त्वं तत्रापि "स्वात्मगाः सृष्टिसंहाराःस्वरूपत्वेन संस्थिताः ।" इति नीत्या सृष्ट्यादिलीलाःस्वाभिन्ना अवभासयसि इति किमिदमत्याश्चर्यमेतद्यच्छक्तिस्वभावव्यतिरेकेण शिवस्वभावस्यासद्भावान्निजं किमपि तात्त्विकं वपुर्न निष्कृष्यते इत्यर्थः ।

एतेन शिवयोरैकात्म्यपर्यवसितमेव स्वरूपं न जातुचिद्भिद्यते । तदुक्तम्—

तथा तथा दृश्यमानानां शक्तिसहस्राणामेकसंघट्टः ।
निजहृदयोद्यमरूपो भवति शिवो नाम परमस्वच्छन्दः ॥

इति, वस्तुतस्त्वेकमेव परं संवित्तत्त्वं पुंस्त्रीशब्दव्यपदेश्यतयोपास्यंकेवलं चिदानन्दयोर्गुणप्राधान्यभावेन भेदकलनायां कामेश्वरकामेश्वरीमिथुनावतारकल्पनेति बोध्यम् ॥३५॥

इदानीं स्तुतिकारः सम्प्रदायक्रमपुरःसरं परमोपादेयमहार्थक्रमसेवनयैवायुः साफल्यं प्रार्थयमानः स्वस्य महार्थोपदेशपात्रतां सूचयति—

**असंख्यैः प्राचीनैर्जननि ! जननैः कर्मविलया-**
**द्गते जन्मन्यन्ते गुरुवपुषमासाद्य गिरिशम् ।**
**अवाप्याज्ञां शैवीं क्रमतनुमपि त्वां विदितवान्**
**नयेयं त्वत्पूजास्तुतिविरचनेनैव दिवसान् ॥३६॥**

CC-0 Kashmir Research Institute. Digitized by eGangotri

हे जननि ! जनयति चतुरण्डीं शक्तिमायाप्रकृतिपृथ्वीलक्षणां गर्भीकृततत्त-दनन्तभेदोपभेदभावजातां प्रसूते इति जननी सर्वस्यास्य पूर्णाहन्तायां गर्भस्व-भावतया व्यवस्थितत्वात् । तदुक्तं सिद्धपादैः--

शक्तिर्माया प्रकृतिः पृथिवीति चतुर्विभागमण्डंयत् ।
यस्यविभागेऽस्ति पुनर्बहुधा सर्वं स्थितं मयि तत् ॥

इति तथा "मातृकाचक्रसंबोधः" (२-७) इति शिवसूत्रे वार्तिककृतापि--

अतोऽकारहकाराभ्यामहमित्यपृथक्तया ।
प्रपञ्चं शिवशक्तिभ्यां क्रोडीकृत्य प्रकाशते ॥

इति, असंख्यैरानन्त्याद्गणनाविहीनैः प्राचीनैरनादिप्रवृत्ततया प्राग्भ-वैर्जननैर्देवनरपशुपक्षिपतङ्गक्रिमिकीटसरीसृपादिशरीरग्रहणैः कर्मणां शुभाशुभा-द्यात्मकानां विलयात् "नाभुक्तं क्षीयते कर्मकल्पकोटिशतैरपि" (गी.) येनेदं तद्धि भोगत इत्याद्युक्तस्थित्या विलयं परिसमाप्तिंविधाय पुण्यैककर्मपारिशेष्ये-णान्ते जन्मनि दीक्षाद्यनुग्रहयोग्यमानुष्यशरीरग्रहणरूपेऽपश्चिमे भवे गते लब्धे सतियद्गीतम्--

बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते ।
वासुदेवः सर्वमिति स महात्मा सुदुर्लभः ॥ (गी. ७-१९)

इति, कुलार्णवेऽपि--

चतुरशीतिलक्षेषु शरीरेषु शरीरिणाम् ।
न मानुष्यं विनान्यत्र तत्त्वज्ञानं तु लभ्यते ॥
अत्र जन्मसहस्राणां सहस्रैरपि पार्वति ।
कदाचिल्लभते जन्तुर्मानुष्यं पुण्यसञ्चयात् ॥ (उ. १,श्लो १४-१५)

इति, तदनन्तरं तत्रापि तीव्रतरानुग्रहाघाते गुरुवपुषं गुरुमूर्तिस्थमनु-

CC-0 Kashmir Research Institute. Digitized by eGangotri

ग्रहप्रवणत्वाद् गिरिशमादिनाथरूपं शिवमासाद्य प्राप्य तद् द्वारेणैव दीक्षासंस्कारादिविविधोपायसामग्रीप्राप्तेः, तदुक्तम्—

परिपक्वमलानेतानुत्सादनहेतुशक्तिपातेन ।
योजयति परे तत्त्वे स दीक्षयाचार्यमूर्तिस्थः ॥

तथा—

यस्मान्महेश्वरः साक्षात् कृत्वा मानुष्यविग्रहम् ।
कृपया गुरुरूपेण मग्नाःप्रोद्धरति प्रजाः ॥

इति ।

इत्येतत्प्राकप्रपञ्चितम् । तदन्वासादनसामनन्तर्येण तस्माद्गुरोः सकाशाद् दीक्षासंस्कारपुरःसरं शैवीं शिवाया आदिदेवीस्वरूपायाः श्रीमङ्गलादेव्याः सम्बन्धिनीं सिद्धयोगेश्वरीसम्प्रदायागतामतिरहस्यमहार्थमयीमाज्ञां पीठचक्रचक्रेश्वरीपरामर्शसारां सद्देशिकवरमुखादवाप्य सम्यक् परिशील्य तदनन्तरमेव त्वां प्रत्यगात्मतयाहन्ताप्रत्ययवेद्यामपि क्रमाः सृष्ट्यादिचतुष्टयार्थस्वरूपास्तनवो मूर्तयो यस्या एवंविधां क्रमैकमयीं, अपिना क्रमाक्रमादिमूर्तिमपि विदितवान् स्वात्मैक्येन परामर्शं कृतवान्, अहं, तव पीठचक्रौघसृष्ट्याद्यनाख्यभासाक्रमसमयेश्वरीपरामर्शमय्याश्चिदद्वयप्रथासारायाः पूजायाः अथ च—

करणेन्द्रियचक्रस्थां देवीं संवित्स्वरूपिणीम् ।
विश्वाहङ्कृतिपुष्पैस्तु पूजयेत् सर्वसिद्धये ॥

इत्युक्तदिशा विश्वात्मभावदायिन्याः पराहन्ताभावनात्मनः पूजाया वास्तुतेश्चानाहतमहारावोच्चारस्वरूपाया विरचनेनैवानन्यमनस्कतया व्यापारेणैव दिवसान् प्रोक्तकुलपूजोपयोगिनश्चतुरश्चतुरो दिवसानहानि नयेयमतिवाहयेयमिति प्रार्थनयां लिङ् एतेन सृष्ट्यादिक्रमत्रयरूपतां स्फारयन्ती तदतिक्रान्तवपुषा च प्रस्फुरन्ती तदुभयानुभयरूपा पारमेश्वरी स्वसंविदेवास्तीत्युक्तंभवति एतेन चतुष्टयार्थसूचनं महार्थाभिधानमाचार्यः कृतवान् तदुक्तम्—

CC-0 Kashmir Research Institute. Digitized by eGangotri

धाम्नां त्रयाणामप्येषां सृष्ट्यादिक्रमयोगतः ।
भवेच्चतुर्धावस्थानमेवं द्वादशधोदितः ॥
स्वसंवित्परमादित्यः प्रकाशवपुरव्ययः ।

इति, तथा—

क्रमत्रयसमाश्रयव्यतिकरेण या सन्ततम्
क्रमत्रितयलङ्घनं विदधती बिभात्युच्चकैः ।
क्रमैकवपुरक्रमप्रकृतिरेव या शोभते
करोमि हृदि तामहं भगवतीं परां संविदम् ॥

इत्यन्यथायुषो नैष्फल्यात् । श्रीकुलार्णवे—

कुल* ज्ञानविहीनस्य दिनान्यायान्ति यान्ति च ।
स लोहकारभस्त्रेव श्वसन्नपि न जीवति ॥ (द्वि. उ. श्लो. ६२)

इति ॥३६॥

एवं परोपकारैक प्रवणत्वेन श्रोतृजनमनःप्रवृत्तये सुगोप्यामपि स्वोपास्यकुलदेवीक्रमोपासां स्फुटं प्रदर्शयति—

**यत्षट्पत्रं कमलमुदितं तस्य या कर्णिकाख्या**
**योनिस्तस्याः प्रथितमुदरे यत्तदोङ्कारपीठम् ।**
**तस्मिन्नन्तः कुचभरनतां कुण्डलीतः प्रवृत्तां**
**श्यामाकारां सकलजननीं सन्ततं भावयामि ॥३७॥**

लिङ्गशरीरे हि सुषुम्णानाडीमाश्रित्याकुलादीनि महाबिन्द्वन्तानि द्वात्रिंशत्पद्मानि स्वच्छन्दसंग्रहादौ सर्वज्ञेनादिगुरुणा श्रीकण्ठनाथेनाभिहितानि, तेष्वाद्यन्तयोः सहस्रारकमलद्वयमूर्ध्वाधोमुखमस्ति, अधः सहस्रदलकमलस्योपरि

---

*धर्मेति पाठान्तरम्

CC-0 Kashmir Research Institute. Digitized by eGangotri

अष्टदलं कमलं तदुपरि षड्दलं कुलपद्माख्यं तदुपर्युपरि मूलाधारादीनि कमलानि चक्रपर्यायाणीति तन्त्रागमोक्तस्थितिपरिपाट्या वक्ष्यमाणषट्पत्रकमलव्यवस्था बोध्या। नत्वत्र षट्स्वाधारकमलेषु स्वाधिष्ठानाख्यं षड्दलकमलमवसेयम्। तेन यत्कुलपङ्कजसंज्ञं षट्पत्रं षड्दलं कमलमुदितं सुषुम्णानाड्याश्रितकमलस्थानप्रक्रियायामागमेषु प्रोक्तं, तस्य या कर्णिकाख्या योनिस्त्रिकोणं कुलासनं गुरुमुखैकगम्यं तस्या योनेरुदरे मध्ये यत्तदिति स्वानुभवैकसंवेद्यमोङ्कारपीठं प्रथितम्, तस्मिन्नन्तस्तन्मध्ये स्थितां कुलदेवीरूपां सकलस्य प्रमातृप्रमाणप्रमेयजातस्य ब्रह्मादिकीटपर्यन्तसकलाख्यप्रमातृवर्गस्य वा शिवादिधरान्तजडाजडसमूहस्य वा शक्तिवर्गस्य वा जननीं प्रसवित्रीं कुचभरेण प्रागुक्तप्रकारतो ज्ञानक्रियाद्वयशक्तिस्फारेण नतां ज्ञेयकार्यात्मप्रपञ्चस्फारणप्रवणाम्, एवं तत्तदनन्ताभासवैचित्र्यावभासनकारित्वेन प्रथमानत्वेऽपि भेदभावकमायीयतेजोंऽशग्रहणाच्च तत्। सर्वसंहारकत्वेन कृष्णं तिमिररूपधृत्। इति, उक्तनीत्या तत्तद्बाह्यार्कादिप्रकाशनाभास्वविलक्षणसर्वधामसंहारकतेजोरूपत्वात् श्यामाकारात्मनियतसंविदाकारां तथा कुण्डलीतोऽध्युष्टवलयाकारसूक्ष्मनालात्मककुण्डलीमवलम्ब्य कुलकमलादकुलपद्मस्थमहाबिन्दुपरमशिवसङ्गमनाय सुषुम्णान्तः स्थाधारकमलवनविकासपुरःसरं प्रवृत्तामूर्ध्वंप्रसृतां सन्ततमविरतमहं भावयामि चिन्तयामीति स्तुतिकृत्स्वोपास्यदेवताया उपासनामक्रममन्तर्गर्भिताधारादिचक्रभावनाद्युपेतं साधकजनप्रवृत्त्यर्थं प्रकटं परामृष्टवान्। तदुक्तं—

यदोल्लसतिशृङ्गाटपीठात् कुटिलरूपिणी।
शिवार्कमण्डलं भित्त्वा द्रावयन्तीन्दुमण्डलम्॥
तदुद्भवामृतस्यन्दिमदिरानन्दनन्दिता।
कुलयोषित्कुलं त्यक्त्वा परं पुरुषमेति सा॥
निर्लक्षणं निर्गुणं च कुलरूपविवर्जितम्।

CC-0 Kashmir Research Institute. Digitized by eGangotri

ततःस्वच्छन्दरूपा तु परिभ्रम्य जगत्पुनः ॥
तेनाचारेण सन्तुष्टा पुनरेकाकिनी सती ।
रमते सेयमव्यक्ता त्रिपुरा व्यक्तिमागता ॥

इति, प्रोक्तकुलपद्मानां निर्णयस्तु स्वच्छन्दसंग्रहे—

अधश्चोर्ध्वं सुषुम्णायाःसहस्रदलसंयुतम् ।
रक्तं श्वेतं च साहस्रदलस्थशक्तिभिर्युतम् ॥
ऊर्ध्वाधोमुखमीशानि ! कर्णिकाकेसरान्वितम् ।
शक्तिरूपं महादेवि ! कुलाकुलमयं शुभम् ॥
पङ्कजद्वयमीशानि ! स्थितं शाश्वतमव्ययम् ।
तयोर्मध्ये सुषुम्णान्तस्त्रिंशदाधारपङ्कजम् ॥
शक्तिरूपं शिवाकारं सर्वेभ्यो मत्प्रियालयम् ।
तेषां रूपं क्रमं चैव क्रमाद्वक्ष्येऽधुना शृणु ॥
गुदमेढ्रान्तरं देवि ! पञ्चाङ्गुलसमुच्छ्रितम् ।
कन्दमेकाङ्गुलं मध्ये द्व्याङ्गुलविसारणम् ॥
तस्य मध्ये महायोनिस्त्रिकोणाकाररूपिणी ।
सुषुम्णा योनिमध्यस्था तस्या मूले महेश्वरि ! ॥
अधः पद्मं सहस्रारं कर्णिकाकेसरान्वितम् ।
तैजसं रत्नसन्दीप्तं तद्दलस्थितशक्तिभिः ॥
प्रतिकिञ्जल्कसंस्थाभिः शक्तिभिः संवृतं प्रिये ! ।
कर्णिका मध्यतो देवि ! कुलदेवी च संस्थिता ॥
तत्पद्मोर्ध्वं सुषुम्णाया मध्ये त्वेकाङ्गुलोपरि ।
पद्ममष्टदलैर्युक्तमष्टग्रन्थिसमन्वितम् ॥
रक्तं सुकर्णिकोपेतं रक्तकिञ्जल्कशोभितम् ।

CC-0 Kashmir Research Institute. Digitized by eGangotri

ग्रन्थ्यग्रस्थत्रिशृङ्गं च ब्रह्माण्याद्यष्टभैरवैः ॥
अष्टपत्रस्थितग्रन्थिस्थितवामादिशक्तिभिः ।
तदन्यशक्तिभिश्चैव शृङ्गस्थाभिः समावृतम् ॥
तन्मध्ये कौलशक्त्या च सेवितं च स्मरेत्ततः ।
एकाङ्गुलप्रमाणोर्ध्वे षड्दलं कुलपङ्कजम् ॥

इत्यादि ॥३७॥

इत्थमियति ग्रन्थसमुदाये स्तुतिकर्तुर्भक्तिव्यतिरेकेणार्थनीयान्तरस्यानुद्देशाददानीमशेषार्थनीयवितरणनान्तरीयकं पालनमात्रं प्रार्थयमान उपसंहरति—

**भुवि पयसि कृशानौ मारुते खे शशाङ्के**
**सवितरि यजमानेऽप्यष्टधाशक्तिरेका।**
**वहति कुचभराभ्यां या विनम्रापि विश्वं**
**सकलजननि ! सा त्वं पाहि मामित्यवश्यम् ॥३८॥**

भुवि भूमौ, पयसि जले कृशानौ, पावके, मारुते वायौ, खे नभसि, शशाङ्के सोमे, सवितरि सूर्ये, यजमाने प्रमातरि, एवं भूम्यादिमूर्त्या 'भूमिरापोऽनलो वायुरिति वचनादष्टधाप्यपराख्यप्रकृतिरूपाभिरष्टभिर्मूर्तिभिः प्रस्फुरितापि शक्तिस्तत्त्वत एका पराचिद्रूपा सर्वाधारत्वात् । या स्वस्वातन्त्र्यादधः प्रसरौन्मुख्येन बहिरुल्लिलसयिषायां—

"नौम्यनुत्तरनाथस्य रश्मिद्वयमहं सदा

शिवशक्तीतिविख्यातमिति शैवागमस्थित्या शिवशक्तितत्त्वदशाधिशायिनी, अत एवेषदभिव्यक्तस्वस्वरूपपरामर्शात्मककूजनात् विभागावभासिताभ्यां कुचभराभ्यामुक्तरश्मिरूपाभ्यां विनम्रा क्रमात्क्रमं तारतम्येन कालाग्न्यन्तविविध-

CC-0 Kashmir Research Institute. Digitized by eGangotri

स्थूलरूपेण परिणम्य प्रस्फुरितेत्यर्थः। तदुक्तं स्वच्छन्दे—

तदेव भवति स्थूलं स्थूलोपाधिवशात् प्रिये।
स्थूलसूक्ष्मविभेदेन तदेकं संव्यवस्थितम्॥ (प ४-२९५)

इति। विश्वमशेषनीलसुखादिरूपं जगदपि वहति धारयति संविन्निष्ठत्वेन व्यवस्थापयतीत्यर्थः। संविन्निष्ठा हि विषयव्यवस्थितयः इति न्यायात्। अथ च या स्वयं कुचभारभुग्ना सा कथं भरणीयं वहेत् तत्रापि न केवलमेकमपितु विश्वं सकलजननीत्वादिति विरोधाभासः। अत एव विश्ववहनाद्धेतोः हे सकलजननि! इतिवाच्यार्थानुगुण्येन सम्बुद्धिः। सा त्वं मां स्वभक्तमवश्यं ध्रुवं पाहि पाया अनुगृह्णीयाः प्रार्थनायां लोट् नतु विधौ सर्वजनन्या गौरवातिशयाद्विधिचोद्यत्वानुपपत्तेरिति। पालनमात्रे एवाकाङ्क्षणीयान्तरनिर्वाहस्याप्यन्तर्भावादिति तन्मात्रमेवान्ततः प्रार्थ्यते। भिन्नक्रमतया चेतिशब्दः स्तुतेः समाप्तिं द्योतयतीत्यपि बोध्यमिति शिवम्॥३८॥

आधारे तु जडाजडे किल गता वाणी समुज्जृम्भते
नो चित्रं जनताचमत्कृतिरतो भूयो दिदृक्षावताम्।
यत्र व्योम सरस्वती निरुपमा द्राक् प्रोन्मिमेष स्तवे
तस्मिन् पूर्तिमगादिदं विवरणं गूढाशये पञ्चमे॥१।
श्रीदेव्या हृदयाम्बुजासनगया संचोदिता वाङ्निजा
तस्माद्या क्रमतो निःसृत्य वदनं यन्मे समाशिश्रिये।
सैवेयं व्यवृणोत् स्फुटं सुगमया पञ्चस्तवीं व्याख्यया
जिह्वां केवलमप्यवाप्य किल मे हेतुं निमित्ताभिधम्॥२।
विद्वांसोऽनुपमेयसूक्ष्मधिषणाकौशल्यभाजः कृपा-
पीयूषोदधयो विमृश्य तदिदं बालस्य सम्भाषितम्।

CC-0 Kashmir Research Institute. Digitized by eGangotri

मन्ये प्रीतिमुपेयुरप्यगुणतां नोन्मीलयेयुः परं
ह्यक्षुराणे पथि गच्छतः स्खलितकानि स्युः क्रमानुक्रमे ॥३।
जन्मावन्ध्यमवाप्य यो द्विजवरश्रीकेशवाद्धोमतो
दीक्षां प्रापदगण्यपुण्यवशतः श्रीमन्मुकुन्दाद्गुरोः ।
काश्मीरप्रवरेशपुर्यधिवसन् शैवागमज्ञानवित्
भट्टोपाधिहरः परोपकृतये व्याख्यामिमां स व्यधात् ॥४।
वैक्रमीये(१९९०) व्योमनन्दनवेन्दुमितवत्सरे ।
माहेश्वरो हरः शास्त्री भट्टोपाधिविभूषितः ॥५।
पञ्चस्तव्यां व्यधात् श्रीमद्धर्माचार्यकृताविमम् ।
व्याख्याग्रन्थं महादेवीचोदनापारवश्यतः ॥६।

**इति श्रीमद्धर्माचार्यविरचितायां पञ्चस्तव्यां**

श्रीमहामाहेश्वरपण्डितहरभट्टशास्त्रिकृता

**टीका सम्पूर्णा ॥**



CC-0 Kashmir Research Institute. Digitized by eGangotri

## पञ्चमस्तवान्तर्गतानां श्लोकानामकाराद्यनुक्रमेणानुक्रमणिका





CC-0 Kashmir Research Institute. Digitized by eGangotri

## पञ्चमे स्तवे समुद्धृतानां ग्रन्थादीनामकारादिक्रमेणानुक्रमणिका



CC-0 Kashmir Research Institute. Digitized by eGangotri

CC-0 Kashmir Research Institute. Digitized by eGangotri

CC-0 Kashmir Research Institute. Digitized by eGangotri

## श्रीपञ्चस्तव्याः पञ्चमेस्तवे प्रमाणत्वेनोद्धृतानां ग्रन्थानां नामानि

| क्रमसंख्या | ग्रन्थनाम | क्रमसंख्या | ग्रन्थनाम |
|---|---|---|---|
| १ | अजडप्रमातृसिद्धिः | २५ | चतुःशती |
| २ | अध्यात्मगमायणम् | २६ | चिद्गगनचन्द्रिका |
| ३ | अष्टावक्रगीता | २७ | छान्दोग्योपनिषत् |
| ४ | आनन्दलहरी | २८ | तैत्तिरीयोपनिषत् |
| ५ | ईश्वरसिद्धिः | २९ | तन्त्रालोकः |
| ६ | ईश्वरप्रत्यभिज्ञा | ३० | त्रिपुरासारसमुच्चयः |
| ७ | ईशावास्योपनिषित् | ३१ | त्रिपुरासिद्धान्तः* |
| ८ | उत्पलस्तोत्रावली | ३२ | दुर्गासप्तशती |
| ९ | ऋग्वेदसंहिता | ३३ | देवी भागवतम् |
| १० | ऐतरीयोपनिषत् | ३४ | देवी पुराणम् |
| ११ | कठोपनिषत् | ३५ | देविकाक्रमः* |
| १२ | कामकलाविलासः | ३६ | निशाचारः |
| १३ | कामिका (तन्त्रम्)* | ३७ | नसिंहोपनिषत् |
| १४ | कालिका पुराणम् | ३८ | नेत्रतन्त्रम् |
| १५ | कालिका क्रमः | ३९ | पद्मपुराणम् |
| १६ | कुलार्णवतन्त्रम् | ४० | परात्रीशिका |
| १७ | कुलामृतम् | ४१ | परासक्तम्* |
| १८ | कुलचूडामणिः | ४२ | परमार्थसारः |
| १९ | कुलगह्वरम्* | ४३ | पूजारहस्यम् |
| २० | कूर्मपुराणम् | ४४ | प्रत्यभिज्ञाहृदयम् |
| २१ | गरुडपुराणम् | ४५ | प्रपञ्चसारः |
| २२ | गौडपादकारिका | ४६ | बृहन्नारदीयोपनिषत् |
| २३ | गौरीस्तुतिः | ४७ | बृहदारण्यकोपनिषत् |
| २४ | गन्धर्वतन्त्रम् | ४८ | बोधसारः |

CC-0 Kashmir Research Institute. Digitized by eGangotri

| क्रमसंख्या | ग्रन्थनाम | क्रमसंख्या | ग्रन्थनाम |
|---|---|---|---|
| ४९ | ब्रह्मसूत्रम | ७७ | वासिष्टरामायणम् |
| ५० | ब्रह्माण्डपुराणम् | | (वायुसंहिता) |
| ५१ | भगवद्गीता | ७८ | विद्यार्णवतन्त्रम् |
| ५२ | भैरवस्तोत्रम् | ७९ | विरूपाक्षपञ्चाशिका |
| ५३ | मतङ्गशास्त्रम्* | ८० | विवेकविलास:* |
| ५४ | महानारदीयोपनिषत् | ८१ | विज्ञानभैरव: |
| ५५ | महाभारतम् | ८२ | विज्ञानेन्दुकौमुदी* |
| ५६ | महार्थमञ्जरी | ८३ | शतपथब्राह्मणम् |
| ५७ | मातङ्गीस्तोत्रम् | ८४ | शक्तिरहस्यम्* |
| ५८ | मालिनीविजयतन्त्रम् | ८५ | शारदातिलकम् |
| ५९ | मालिनीविजयवार्तिकम् | ८६ | शाम्भवदीपिका* |
| ६० | (मार्कण्डेय पुराणम्) | ८७ | शाण्डिल्यसूत्रम् |
| ६१ | मुकुन्दमाला | ८८ | शिवदृष्टि: |
| ६२ | मुण्डकोपनिषत् | ८९ | शिवस्तव:* |
| ६३ | मूलदेवतास्तुति:* | ९० | शिवसूत्रम् |
| ६४ | मृगेन्द्रतन्त्रम् | ९१ | शिवपुराणम् |
| ६५ | मैत्रावसणोपनिषतु | ९२ | श्री पूर्वशास्त्रम्* |
| ६६ | मोक्षोपाय: | ९३ | श्वेताश्वेतरोनिषत् |
| ६७ | योगचूडामणि: | ९४ | सनत्कुमारसंहिता* |
| ६८ | योगदर्शनम् | ९५ | सिद्धान्तविन्दूपनिषत् |
| ६९ | योगशिखोपनिषत् | ९६ | सिद्धान्त:* |
| ७० | योगिनीहृदयम् | ९७ | सुभगोदय:* |
| ७१ | रत्नमाला | ९८ | सौरसंहिता |
| ७२ | रुद्रयामलतन्त्रम् | ९९ | सौन्दर्यलहरी |
| ७३ | लक्ष्मीकुलार्णव:* | १०० | स्तवचिन्तामणि: |
| | लिङ्गपुराणम् | १०१ | स्पन्दनिर्णय: |
| ७४ | वाक्यपदीयम् | १०२ | स्वच्छन्दतन्त्रम् |
| ७५ | वामकेश्वरमतम् | १०३ | संकेतपद्धति:* |
| ७६ | वायु पुराणम् | १०४ | ज्ञानार्णव: |

* एवं चिह्निता ग्रन्था: प्रायशोऽमुद्रिता एव ।

CC-0 Kashmir Research Institute. Digitized by eGangotri

# शुद्धि पत्रम्

| पृष्टम् | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३ | २ | श्रतेः | श्रुतेः |
| ३ | ३ | प्रतिष्ठताः | प्रतिष्ठिताः |
| ३ | टिप्पण्यां | अनुसयन्ति | अनुसंयन्ति |
| ४ | ९ | स्वसंविन्मंयी | स्वसंविन्मयीं |
| ५ | १ | एवैते | एवैते |
| ५ | १ | सवोत्तीर्ण | सर्वोत्तीर्ण |
| ५ | ५ | न्यतिभीक्तितः | -न्यतिभक्तितः |
| ५ | १० | सौराणाां | सौराणां |
| ६ | ३ | संघातवादिनश्चार्वाकाका-स्तावदित्थं | संघातवादिनश्चार्वाकास्ता-वदित्थं |
| ६ | १९ | स्वप्नवद्वाह्यतया | स्वप्नवद्बाह्यतया |
| ६ | १९ | बाह्मार्थाभावो | बाह्यार्थाभावो |
| ७ | १० | 'अर्थभेदेनविवर्तते' इतिच्युतः पाठः | |
| ७ | १९ | उपेयम् | उपेत्यम् |
| ८ | ७ | कर्मरूपोघ्याहर्यः | कर्मरूपोध्याहार्यः |
| ९ | ५ | घ्येयोद्रेकोभवेद | ध्येयोद्रेकोभवेद् |
| ९ | १२ | त्वदाश्रयाम् | त्वदाश्रयणम् |
| ११ | १७ | तवैवेहमिदम्प्रकाशौ | तवैवाहमिदम्प्रकाशौ |
| १२ | ४ | श्री तन्त्रलोके | श्रीतन्त्रालोके |
| १३ | ९ | मघ्यभागो | मध्यभागो |
| १४ | ४ | इत्युच्ते | इत्युच्यते |
| १४ | ५ | पर्वसायी | पर्यवसायी |
| १५ | १३ | कामिकय.म् | कामिकायाम् |
| १५ | १९ | तथहि | तथाहि |

१५शे पृष्टे विंशायां पंक्तौ लेखकभ्रान्त्या च्युतोऽयं पाठः

ज्ञानादिगुणास्पदमात्मेति नैयायिकादयः सुखाद्युपरागतिरस्कृत आत्मेति मी-मांसकाः ज्ञानसन्तान एवात्मेति सौगताः ।

CC-0 Kashmir Research Institute. Digitized by eGangotri

| पृष्टम् | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १६ | ३ | भावजातमपह्लुपवते | भावजातमपह्लुवते |
| १६ | ५ | बाह्यमेर्थं | बाह्यमर्थं |
| १६ | ९ | वैयाकरणस्तु | वैयाकरणास्तु |
| १६ | ११ | त्रिकाद्याम्नानय | त्रिकाद्याम्नाय |
| १६ | २२ | पारिपप्लवं | पारिप्लवं |
| १८ | २० | दापम्पत्यप्रेम्णा | दाम्पत्यप्रेम्णा |
| २२ | ९ | सहस्वत् | महस्वत् |
| २३ | ८ | ताडितां | तडितां |
| २९ | १३ | महामायेत्युच्ते | महामायेत्युच्यते |
| ३० | ६ | तदक्त श्वीतन्त्रालोके | तदुक्तं श्रीतन्त्रालोके |
| ३० | १२ | तदुक्तं श्री तन्त्रलोके | तदुक्तं श्रीतन्त्रालोके |
| ३१ | ११ | सन्बन्धः | सम्बन्धः |
| ३२ | ६ | माध्यस्थ्या तत्ससर्गा | माध्यस्थ्यात्तत्संसर्गा |
| ३२ | १६ | निश्चिनुमहे निर्णयामहे इति च्युतः पाठः | |
| ३४ | १२ | 'भुवनाध्वेतिच्युतः पाठः' | |
| ३४ | १३ | विरूपाक्षपञ्चशिकायाम् | विरूपाक्षपञ्चाशिकायाम् |
| ३५ | ३ | देहाद्याभासशन्त्यां | देहाद्याभासशान्त्यां |
| ४० | ८ | दुःखस्पपद | दुःखास्पद |
| ४१ | ११ | विद्यर्णवतंत्रे | विद्यार्णवतन्त्रे |
| ४२ | ४ | मायाख्यमुत्तम् | मायाख्यमुत्तमम् |
| ४२ | टिप्पण्यां | क्षेमराजः | जयरथः |
| ४४ | १२ | विराजमानाति दैवतानिस्वरश्मि इति दैवतानि' च्युतः पाठः | |
| ४४ | २१ | ध्वन्यात्मया | ध्वन्यात्मतया |

CC-0 Kashmir Research Institute. Digitized by eGangotri

## (विशिष्ट-) पदानुक्रमणिका



CC-0 Kashmir Research Institute. Digitized by eGangotri

CC-0 Kashmir Research Institute. Digitized by eGangotri

CC-0 Kashmir Research Institute. Digitized by eGangotri

CC-0 Kashmir Research Institute. Digitized by eGangotri

CC-0 Kashmir Research Institute. Digitized by eGangotri